॥ श्रीः ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥

सम्पुटः ६.

## सुन्दरकाण्डः ॥





श्रीरङ्गस्थ

श्रीवाणीविलासमुद्रायन्त्रालये

समुद्रितम् ।

१९२०.

॥ श्री. ॥

# ॥ विषयानुक्रमणिका ॥





---

☞ स्थूलाक्षराणि पूर्वार्धकानाम्, सूक्ष्माक्षराणि आरम्भश्लोकसंख्यां च द्योतयन्ति ॥

॥ श्रीः ॥

## ॥ श्रीमद्रामायणपूजाविधिः ॥

---

["पूजयंश्च पठंश्चेममितिहासं पुरातनम् ।
सर्वपापैः प्रमुच्येत दीर्घमायुरवाप्नुयात् ॥"

श्रीवाल्मीकिवचनेन पूजापूर्वकं श्रीमद्रामायणपारायण-
न् आदौ वक्ष्यमाणप्रकारेण पुस्तके श्रीरामचन्द्रपूजां कृत्वा
…श्लोकान् पठित्वा ततः पारायणं कुर्यात् । ]

ॐ अच्युताय नमः । अनन्ताय नमः । गोविन्दाय
ः । केशव । नारायण । माधव । गोविन्द । विष्णो ।
…दन । त्रिविक्रम । वामन । श्रीधर । हृषीकेश ।
… । दामोदर । (इति आचम्य)

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥

ॐ भूः भूर्भुवस्सुवरोम् । ममोपात्तसमस्त-
…क्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं शुभे शोभने मुहूर्ते अद्य

ब्रह्मणः द्वितीयपरार्धे श्वेतवराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे प्रथमे पादे जम्बूद्वीपे भारतवर्षे भरतखण्डे मेरोः दक्षिणे पार्श्वे शकाब्दे अस्मिन् वर्तमाने व्यावहारिके प्रभवादीनां षष्ट्याः संवत्सराणां मध्ये ... नामसंवत्सरे ... अयने ... ऋतौ ... मासे ... पक्षे ... शुभतिथौ ... वासरयुक्तायां ... नक्षत्रयुक्तायां शुभयोगशुभकरण एवंगुणविशेषणविशिष्टायां अस्यां वर्तमानायां ... शुभतिथौ ममोपात्त प्रीत्यर्थं श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेत श्रीरामचन्द्रप्रसादसिद्धयर्थं श्रीरामचन्द्रप्रसादेन धर्मार्थकाममोक्षचतुर्विधफलपुरुषार्थसिद्धयर्थं दीर्घायुष्यसिद्धयर्थं अरोगदृढगात्रतासिद्धयर्थं सर्वारिष्टनिवृत्त्यर्थं सर्वाभीष्टसिद्धयर्थं श्रीमद्वाल्मीकिरामायणे *सुन्दरकाण्डपारायणं करिष्ये । तदङ्गं यथाशक्ति ध्यानावाहनादिषोडशोपचारैः अस्मिन् पुस्तके श्रीरामचन्द्रपूजां करिष्ये । तदङ्ग कलशपूजां करिष्ये । (इति संकल्प्य कलशपूजां कुर्यात्) (कलशं गन्धपुष्पाक्षतैरलङ्कृत्य, कलशं स्पृष्ट्वा जपेत्)

---

* इतरकाण्डपारायणे तत्तत्काण्डनाम ब्रूयात् ।

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥

कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा ।
ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ॥

अङ्गैश्च सहिताः सर्वे कलशाम्बु समाश्रिताः ।
आयान्तु रामपूजार्थं दुरितक्षयकारकाः ॥

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धुकावेरि जलेऽस्मिन् संनिधिं कुरु ॥

(पूजोपकरणानि आत्मानं च प्रोक्ष्य, पुष्पा-
क्षतान् गृहीत्वा)

ामे भूमिसुता पुरश्च हनुमान् पश्चात् सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च ।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान्
मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥

अस्मिन् पुस्तके श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेत-
ीरामचन्द्रं ध्यायामि । आवाहयामि ।

| | | |
|---|---|---|
| श्रीसीता...स्वामिने नमः | आसनं | समर्पया |
| ,, | पाद्यं | ,, |
| ,, | अर्घ्यं | ,, |
| ,, | आचमनीयं | ,, |
| ,, | मधुपर्कं | ,, |
| ,, | स्नानं | ,, |
| ,, | स्नानानन्तरं आचमनीयं | ,, |
| ,, | वस्त्रार्थं अक्षतान् | ,, |
| ,, | उपवीतार्थं अक्षतान् | ,, |
| ,, | आभरणार्थं अक्षतान् | ,, |
| ,, | गन्धान् धारयामि | ,, |
| ,, | गन्धस्योपरि हरिद्राकुङ्कुमं | ,, |
| ,, | अक्षतान् | ,, |
| ,, | पुष्पाणि | ,, |

ओं केशवाय नमः — मधुसूदनाय नमः
नारायणाय नमः — त्रिविक्रमाय नमः
माधवाय नमः — वामनाय नमः
गोविन्दाय नमः — श्रीधराय नमः
विष्णवे नमः — हृषीकेशाय नमः

ॐ पद्मनाभाय नमः रामचन्द्राय नमः।
दामोदराय नमः वेधसे नमः
राघवाय नमः रघुनाथाय नमः
श्रीरामाय नमः नाथाय नमः
रामभद्राय नमः सीतापतये नमः

श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्र पर-
ब्रह्मणे नमः नानाविधपत्रपुष्पाणि समर्पयामि।
श्रीरामचन्द्राय नमः धूपं आघ्रापयामि।
दीपं दर्शयामि।

ॐ भूर्भुवस्सुवः। तत्सवितु + ब्रह्मणे स्वाहा
ीरामचन्द्रस्वामिने नमः ·· ·· निवेदयामि। नैवेद्या-
न्तर आचमनीयं समर्पयामि। कर्पूरताम्बूलं समर्पयामि।
पूरनीराजनं दर्शयामि। मन्त्रपुष्पं समर्पयामि। अनेक-
ाटिप्रदक्षिणनमस्कारान् समर्पयामि। छत्रं समर्पयामि।
ामरं समर्पयामि। नृत्यं समर्पयामि। गीतं समर्पयामि।
द्यं समर्पयामि। आन्दोलिकां समर्पयामि। समस्त-
ोपचारदेवोपचारपूजाः समर्पयामि॥

अनया पूजया श्रीरामचन्द्रः प्रीयताम्॥
इति श्रीरामार्चनपूजाविधिः॥

॥ श्री ॥

# ॥ श्रीमद्रामायणपारायणोपक्रमः ॥

## ॥ स्मार्तसंप्रदायः ॥



शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥२॥

दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिमयी-
मक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण ।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा
भासमानासमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन्रामकथानादं को न याति परां गतिम् ॥ ५ ॥

यः पिबन्सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ६ ॥

गोष्पदीकृतवारीशं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ७ ॥

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ ८ ॥

उल्लङ्घ्य सिन्धोः सलिलं सलीलं
यः शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ९ ॥

आञ्जनेयमतिपाटलाननं
काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं
भावयामि पवमाननन्दनम् ॥ १० ॥

यत्र यत्र रघुनाथकीर्तनं
तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं
मारुतिं नमत राक्षसान्तकम् ॥ ११ ॥

मनोजवं मारुततुल्यवेगं
जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।

वातात्मजं वानरयूथमुख्यं
श्रीरामदूतं शिरसा नमामि ॥ १२ ॥

यः कर्णाञ्जलिसम्पुटैरहरहः सम्यक्पिबत्यादरा-
द्वाल्मीकेर्वदनारविन्दगलितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणैरत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोः पदं
शाश्वतम् ॥ १३ ॥

तदुपगतसमाससंधियोगं
सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं
दशशिरसश्च वधं निशामयध्वम् ॥ १४ ॥

वाल्मीकिगिरिसंभूता रामसागरगामिनी ।
पुनातु भुवनं पुण्या रामायणमहानदी ॥ १५ ॥

श्लोकसारसमाकीर्णं सर्गकल्लोलसंकुलम् ।
काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥१७॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

वामे भूमिसुता पुरश्च हनुमान्पश्चात्सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च ।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवा-
न्मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥

नमोऽस्तु रामाय सलक्ष्मणाय
देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो
नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ॥ २० ॥



॥ श्रीवैष्णवसंप्रदायः ॥

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन्रामकथानादं को न याति परां गतिम् ॥

यः पिबन्सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ३ ॥

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ४ ॥

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयंकरम् ॥

मनोजवं मारुततुल्यवेगं
जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं
श्रीरामदूतं शिरसा नमामि ॥ ६ ॥

उल्लङ्घ्य सिन्धोः सलिलं सलीलं
यः शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ७ ॥

आञ्जनेयमतिपाटलाननं
काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं
भावयामि पवमाननन्दनम् ॥ ८ ॥

यत्र यत्र रघुनाथकीर्तनं
तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं
मारुतिं नमत राक्षसान्तकम् ॥ ९ ॥

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १० ॥

तदुपगतसमाससंधियोगं
सममधुरोपनतार्थवाक्यबद्धम् ।

रघुवरचरितं मुनिप्रणीतं
दशशिरसश्च वधं निशामयध्वम् ॥ ११ ॥

श्रीराघवं दशरथात्मजमप्रमेयं
सीतापतिं रघुकुलान्वयरत्नदीपम् ।
आजानुबाहुमरविन्ददलायताक्षं
रामं निशाचरविनाशकरं नमामि ॥ १२ ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥



॥ माध्वसंप्रदायः ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥

लक्ष्मीनारायणं वन्दे तद्भक्तप्रवरो हि यः ।
श्रीमदानन्दतीर्थाख्यो गुरुस्तं च नमाम्यहम् ॥ २ ॥

वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥ ३ ॥

सर्वविघ्नप्रशमनं सर्वसिद्धिकरं परम् ।
सर्वजीवप्रणेतारं वन्दे विजयदं हरिम् ॥ ४ ॥

सर्वाभीष्टप्रदं रामं सर्वारिष्टनिवारकम् ।
जानकीजानिमनिशं वन्दे मद्गुरुवन्दितम् ॥ ५ ॥

अभ्रमं भङ्गरहितमजडं विमलं सदा ।
आनन्दतीर्थमतुलं भजे तापत्रयापहम् ॥ ६ ॥

भवति यदनुभावादेडमूकोऽपि वाग्मी
जडमतिरपि जन्तुर्जायते प्राज्ञमौलिः ।
सकलवचनचेतो देवता भारती सा
मम वचसि विधत्तां सन्निधिं मानसे च ॥७॥

मिथ्यासिद्धान्तदुर्ध्वान्तविध्वंसनविचक्षणः ।
जयतीर्थाख्यतरणिर्भासतां नो हृदम्बरे ॥ ८ ॥

चित्रै  पदैश्च गम्भीरैर्वाक्यैर्मानैरखण्डितैः ।
गुरुभाव व्यञ्जयन्ती भाति श्रीजयतीर्थवाक् ॥९॥

कूजन्त राम रामेति मधुर मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन्रामकथानादं को न याति परां गतिम् ॥

यः पिबन्सतत रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ १२ ॥

गोष्पदीकृतवारार्शिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ १३ ॥

मुख्यप्राणाय भीमाय नमो यस्य भुजान्तरम् ।
नानावीरसुवर्णानां निकषाश्मायितं बभौ ॥ २६ ॥

स्वान्तस्थानन्तशय्याय पूर्णज्ञानमहार्णसे ।
उत्तुङ्गवाक्तरङ्गाय मध्वदुग्धाब्धये नमः ॥ २७

वाल्मीकेर्गौः पुनीयान्नो महीधरपदाश्रया ।
यद्दुग्धमुपजीवन्ति कवयस्तर्णका इव ॥ २८ ॥

सूक्तिरत्नाकरे रम्ये मूलरामायणार्णवे ।
विहरन्तो महीयांसः प्रीयन्तां गुरवो मम ॥ २९ ॥

हयग्रीव हयग्रीव हयग्रीवेति यो वदेत् ।
तस्य निःसरते वाणी जह्नुकन्याप्रवाहवत् ॥ ३० ॥





॥ श्री ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥



## ॥ सुन्दरकाण्डः ॥



ततो रावणनीतायाः सीतायाः शत्रुकर्शनः ।
इयेष पदमन्वेष्टुं चारणाचरिते पथि ॥ १ ॥

दुष्करं निष्प्रतिद्वन्द्वं चिकीर्षन्कर्म वानरः ।
समुदग्रशिरोग्रीवो गवां पतिरिवाबभौ ॥ २ ॥

अथ वैडूर्यवर्णेषु शाद्वलेषु महाबलः ।
धीरः सलिलकल्पेषु विचचार यथासुखम् ॥

द्विजान्वित्रासयन्धीमानुरसा पादपान्हरन् ।
मृगांश्च सुबहून्निघ्नन्प्रवृद्ध इव केसरी ॥ ४ ॥

नीललोहितमाञ्जिष्ठपत्रवर्णैः सितासितैः ।
स्वभावविहितैश्चित्रैर्धातुभिः समलङ्कृतम् ॥ ५ ॥

कामरूपिभिराविष्टमभीक्ष्णं सपरिच्छदैः ।
यक्षकिंनरगन्धर्वैर्देवकल्पैश्च पन्नगैः ॥ ६ ॥

स तस्य गिरिवर्यस्य तले नागवरायुते ।
तिष्ठन्कपिवरस्तत्र ह्रदे नाग इवाबभौ ॥ ७ ॥

स सूर्याय महेन्द्राय पवनाय स्वयम्भुवे ।
भूतेभ्यश्चाञ्जलिं कृत्वा चकार गमने मतिम् ॥

अञ्जलिं प्राङ्मुखः कुर्वन्पवनायात्मयोनये ।
ततोऽभिववृधे गन्तुं दक्षिणो दक्षिणां दिशम्

प्लवङ्गप्रवरैर्दृष्टः प्लवने कृतनिश्चयः
ववृधे रामवृद्ध्यर्थं समुद्र इव पर्वसु ॥ १० ॥

निष्प्रमाणशरीरः सँल्लिलङ्घयिषुरर्णवम् ।
बाहुभ्यां पीडयामास चरणाभ्यां च पर्वतम् ॥

स चचालाचलश्चापि मुहूर्तं कपिपीडितः ।
तरूणां पुष्पिताग्राणां सर्वं पुष्पमशातयत् ॥

तेन पादपमुक्तेन पुष्पौघेण सुगन्धिना ।
सर्वतः संवृतः शैलो बभौ पुष्पमयो यथा ॥

तेन चोत्तमवीर्येण पीड्यमानः स पर्वतः ।
सलिलं संप्रसुस्राव मदं मत्त इव द्विपः ॥१४॥

पीड्यमानस्तु बलिना महेन्द्रस्तेन पर्वतः ।
रीतीर्निर्वर्तयामास काञ्चनाञ्जनराजतीः ॥१५॥

मुमोच च शिलाः शैलो विशालाः समनःशिलाः ।
मध्यमेनार्चिषा जुष्टो धूमराजीरिवानलः ॥

गिरिणा पीड्यमानेन पीड्यमानानि सर्वतः ।
गुहाविष्टानि भूतानि विनेदुर्विकृतैः स्वरैः ॥

स महान्सत्त्वसंनादः शैलपीडानिमित्तजः ।
पृथिवीं पूरयामास दिशश्चोपवनानि च ॥१८॥

शिरोभिः पृथुभिः सर्पा व्यक्तस्वस्तिकलक्षणैः
वमन्तः पावकं घोरं ददंशुर्दशनैः शिलाः ॥

तास्तदा सविषैर्दष्टाः कुपितैस्तैर्महाशिलाः ।
जज्वलुः पावकोद्दीप्ता बिभिदुश्च सहस्रधा ॥

यानि चौषधजालानि तस्मिञ्जातानि पर्वते ।
विषघ्नान्यपि नागानां न शेकुः शमितुं विषम् ।

अपरे तु महाकाया वमन्तोऽग्निं स्वतेजसा ।
कन्दरेभ्यो विनिष्पेतुः कपिपादाभिपीडिताः ॥

गिरेराक्रम्यमाणस्य तरवस्तरुणाङ्कुराः ।
मुमुचुः पुष्पवर्षाणि रक्तोत्पलसुगन्धिनः ॥

गैरिकाञ्जनसंयुक्ता हरितालसमावृताः ।
व्यदीर्यन्त गिरेस्तस्य शिलास्ताः समनःशिलाः

सचन्दनरसस्नाताश्चित्रकाञ्चनधातुभिः ।
सितैः शिखरनिर्भेदैर्वीतैर्गैरिकधातुभिः ॥२८।

भिद्यतेऽयं गिरिर्भूतैरिति मत्वा तपस्विनः ।
त्रस्ताः विद्याधरास्तस्मादुत्पेतुः स्त्रीगणैः सह

पानभूमिगतं हित्वा हैममासवभाजनम् ।
पात्राणि च महार्हाणि करकांश्च हिरण्मयान् ॥

लेह्यानुच्चावचान्भक्ष्यान्मांसानि विविधानि च ।
आर्षभाणि च चर्माणि खड्गांश्च कनकत्सरून् ॥

कृतकण्ठगुणाः क्षीबा रक्तमाल्यानुलेपनाः ।
रक्ताक्षाः पुष्कराक्षाश्च गगनं प्रतिपेदिरे ॥

हारनूपुरकेयूरपारिहार्यधराः स्त्रियः ।
विस्मिताः सस्मितास्तस्थुराकाशे रमणैः सह ॥

दर्शयन्तो महाविद्यां विद्याधरमहर्षयः ।
विस्मितास्तस्थुराकाशे वीक्षांचक्रुश्च पर्वतम् ॥

शुश्रुवुश्च तदा शब्दमृषीणां भावितात्मनाम् ।
चारणानां च सिद्धानां स्थितानां विमलेऽम्बरे ॥

एष पर्वतसंकाशो हनूमान्मारुतात्मजः ।
तितीर्षति महावेगः सागर मकरालयम् ॥३२॥

रामार्थं वानरार्थं च चिकीर्षन्कर्म दुष्करम् ।
समुद्रस्य परं पारं दुष्प्रापं प्राप्तुमिच्छति ॥

इति विद्याधराः श्रुत्वा वचस्तेषां [illegible]
तमप्रमेयं ददृशुः पर्वते वानरर्षभम् ॥ ३९ ॥

दुधुवे च स रोमाणि चकम्पे चाचलोपमः ।
ननाद सुमहानादं स महानिव तोयदः ॥ [illegible]

आनुपूर्व्येण वृत्तं च लाङ्गूलं लोमभिश्चितम् ।
उत्पतिष्यन्विचिक्षेप पक्षिराज इवोरगम् ॥

तस्य लाङ्गूलमाविद्धमतिवेगस्य पृष्ठतः ।
ददृशे गरुडेनेव ह्रियमाणो महोरगः ॥ ३८ ॥

बाहू संस्तम्भयामास महापरिघसन्निभौ ।
ससाद च कपिः कट्यां चरणौ संचुकोच [illegible]

संहृत्य च भुजौ श्रीमांस्तथैव च शिरोधराम्
तेजः सत्त्वं तथा वीर्यमाविवेश स वीर्यवान्

मार्गमालोकयन्दूरादूर्ध्वं प्रणिहितेक्षणः ।
रुरोध हृदये प्राणानाकाशमवलोकयन् ॥४[illegible]

पद्भ्यां दृढमवस्थानं कृत्वा स कपिकुञ्जरः ।
निकुञ्च्य कर्णौ हनुमानुत्पतिष्यन्महाबलः ॥

वानरान्वानरश्रेष्ठ इदं वचनमब्रवीत् ।
यथा राघवनिर्मुक्तः शरः श्वसनविक्रमः ॥४३॥

गच्छेत्तद्वद्गमिष्यामि लङ्कां रावणपालिताम् ।
न हि द्रक्ष्यामि यदि तां लङ्कायां जनकात्मजाम् ॥

अनेनैव हि वेगेन गमिष्यामि सुरालयम् ।
यदि वा त्रिदिवे सीतां न द्रक्ष्यामि कृतश्रमः ॥

बद्ध्वा राक्षसराजानमानयिष्यामि रावणम् ।
सर्वथा कृतकार्योऽहमेष्यामि सह सीतया ॥

आनयिष्यामि वा लङ्कां समुत्पाट्य सरावणाम् ।
एवमुक्त्वा तु हनुमान्वानरान्वानरोत्तमः ॥४७॥

उत्पपाताथ वेगेन वेगवानविचारयन् ।
सुपर्णमिव चात्मानं मेने स कपिकुञ्जरः ॥४८॥

समुत्पतति तस्मिंस्तु वेगात्ते नगरोहिणः ।
संहृत्य विटपान्सर्वान्समुत्पेतुः समन्ततः ॥४९॥

समत्तकोयष्टिभकान्पादपान्पुष्पशालिनः ।
उद्वहन्नूरुवेगेन जगाम विमलेऽम्बरे ॥ ५० ॥

ऊरुवेगोद्धता वृक्षा मुहूर्तं कपिमन्वयुः ।
प्रस्थितं दीर्घमध्वानं स्वबन्धुमिव बान्धवाः ॥

तदूरुवेगोन्मथिताः सालाश्चान्ये नगोत्तमाः ।
अनुजग्मुर्हनूमन्तं सैन्या इव महीपतिम् ॥५२॥

सुपुष्पिताग्रैर्बहुभिः पादपैरन्वितः कपिः ।
हनूमान्पर्वताकारो बभूवाद्भुतदर्शनः ॥ ५३ ॥

सारवन्तोऽथ ये वृक्षा न्यमज्जँल्लवणाम्भसि ।
भयादिव महेन्द्रस्य पर्वता वरुणालये ॥ ५४ ॥

स नानाकुसुमैः कीर्णः कपिः साङ्कुरकोरकैः ।
शुशुभे मेघसंकाशः खद्योतैरिव पर्वतः ॥५५॥

विमुक्तास्तस्य वेगेन मुक्त्वा पुष्पाणि ते द्रुमाः
अवशीर्यन्त सलिले निवृत्ताः सुहृदो यथा ॥

लघुत्वेनोपपन्नं तद्विचित्रं सागरेऽपतत् ।
द्रुमाणां विविधं पुष्पं कपिवायुसमीरितम् ॥

ताराचितमिवाकाशं प्रबभौ स महार्णवः ।
पुष्पौघेणानुबिद्धेन नानावर्णेन वानरः ॥५८॥

बभौ मेघ इवाकाशे विद्युद्गणविभूषितः ।
तस्य वेगसमाधूतैः पुष्पैस्तोयमदृश्यत ॥ ५९ ॥

ताराभिरभिरामाभिरुदिताभिरिवाम्बरम् ।
तस्याम्बरगतौ बाहू ददृशाते प्रसारितौ ॥ ६० ॥

पर्वताग्राद्विनिष्क्रान्तौ पञ्चास्याविव पन्नगौ ।
पिबन्निव बभौ श्रीमान्सोर्मिमालं महार्णवम् ॥

पिपासुरिव चाकाशं ददृशे स महाकपिः ।
तस्य विद्युत्प्रभाकारे वायुमार्गानुसारिणः ॥

नयने संप्रकाशेते पर्वतस्थाविवानलौ ।
पिङ्गे पिङ्गाक्षमुख्यस्य बृहती परिमण्डले ॥ ६३ ॥

चक्षुषी संप्रकाशेते चन्द्रसूर्याविवाम्बरे ।
मुखं नासिकया तस्य ताम्रया ताम्रमाबभौ ॥

सन्ध्यया समभिस्पृष्टं यथा सूर्यस्य मण्डलम् ।
लाङ्गूलं च समाविद्धं प्लवमानस्य शोभते ॥

अम्बरे वायुपुत्रस्य शक्रध्वज इवोच्छ्रितः ।
लाङ्गूलचक्रेण महाञ्छुक्लदंष्ट्रोऽनिलात्मजः ॥

अरोचत महाप्राज्ञः परिवेषीव भास्करः ।
स्फिग्देशेनाभिताम्रेण रराज स महाकपिः ॥

महता दारितेनेव गिरिर्गैरिकधातुना ।
तस्य वानरसिंहस्य प्लवमानस्य सागरम् ॥

कक्षान्तरगतो वायुर्जीमूत इव गर्जति ।
खे यथा निपतन्त्युल्का ह्युत्तरान्ताद्विनिःसृता ॥

दृश्यते सानुबन्धा च तथा स कपिकुञ्जरः ।
पतत्पतङ्गसंकाशो व्यायतः शुशुभे कपिः ॥

प्रवृद्ध इव मातङ्गः कक्ष्यया बध्यमानया ।
उपरिष्टाच्छरीरेण छायया चावगाढया ॥

सागरे मारुताविष्टा नौरिवासीत्तदा कपिः ।
यं यं देशं समुद्रस्य जगाम स महाकपिः ॥

स स तस्योरुवेगेन सोन्माद इव लक्ष्यते ।
सागरस्योर्मिजालानि उरसा शैलवर्ष्मणा ॥

अभिघ्नंस्तु महावेगः पुप्लुवे स महाकपिः ।
कपिवातश्च बलवान्मेघवातश्च निःसृतः ॥ ७४ ॥

सागरं भीमनिर्घोषं कम्पयामासतुर्भृशम् ।
विकर्षन्नूर्मिजालानि बृहन्ति लवणाम्भसि ॥

पुप्लुवे कपिशार्दूलो विकिरन्निव रोदसी ।
मेरुमन्दरसंकाशानुद्गतान्स महार्णवे ॥ ७६ ॥

अत्यक्रामन्महावेगस्तरङ्गान्गणयन्निव ।
तस्य वेगसमुद्धूतं जलं सजलदं तदा ॥ ७७ ॥

अम्बरस्थं विबभ्राज शारदाभ्रमिवाततम् ।
तिमिनक्रझषाः कूर्मा दृश्यन्ते विवृतास्तदा ॥

वस्त्रापकर्षणेनेव शरीराणि शरीरिणाम् ।
प्लवमानं समीक्ष्याथ भुजगाः सागरालयाः ॥

व्योम्नि तं कपिशार्दूलं सुपर्णं इति मेनिरे ।
दशयोजनविस्तीर्णा त्रिंशद्योजनमायता ॥८०॥

छाया वानरसिंहस्य जले चारुतराभवत् ।
श्वेताभ्रघनराजीव वायुपुत्रानुगामिनी ॥८१॥

तस्य सा शुशुभे छाया वितता लवणाम्भसि ।
शुशुभे स महातेजा महाकायो महाकपिः ॥

वायुमार्गे निरालम्बे पक्षवानिव पर्वतः ।
येनासौ याति बलवान्वेगेन कपिकुञ्जरः ॥

तेन मार्गेण सहसा द्रोणीकृत इवार्णवः ।
आपाते पक्षिसंघानां पक्षिराज इवाबभौ ॥८४॥

हनूमान्मेघजालानि प्रकर्षन्मारुतो यथा ।
प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ॥

प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते ।
पाण्डुरारुणवर्णानि नीलमाञ्जिष्ठकानि च ॥

कपिनाकृष्यमाणानि महाभ्राणि चकाशिरे ।
प्लवमानं तु तं दृष्ट्वा प्लवगं त्वरितं तदा ॥ ८७॥

ववृषुः पुष्पवर्षाणि देवगन्धर्वचारणाः ।
तताप न हि तं सूर्यः प्लवन्तं वानरेश्वरम् ॥

सिषेवे च तदा वायू रामकार्यार्थसिद्धये ।
ऋषयस्तुष्टुवुश्चैनं प्लवमानं विहायसा ॥ ८९ ॥

जगुश्च देवगन्धर्वाः प्रशंसन्तो महौजसम् ।
नागाश्च तुष्टुवुर्यक्षा रक्षांसि विबुधाः खगाः ॥

प्रेक्ष्याकाशे कपिवरं सहसा विगतक्लमम् ।
तस्मिन्प्लवगशार्दूले प्लवमाने हनूमति ॥ ९१ ॥

इक्ष्वाकुकुलमानार्थी चिन्तयामास सागरः ।
साहाय्यं वानरेन्द्रस्य यदि नाहं हनूमतः ॥

करिष्यामि भविष्यामि सर्ववाच्यो विवक्षताम् ।
अहमिक्ष्वाकुनाथेन सगरेण विवर्धितः ॥ ९२ ॥

इक्ष्वाकुसचिवश्चायं नावसीदितुमर्हति ।
तथा मया विधातव्यं विश्रमेत यथा कपिः ॥

शेषं च मयि विश्रान्तः सुखेनातिपतिष्यति ।
इति कृत्वा मतिं साध्वीं समुद्रश्छन्नमम्भसि ॥

हिरण्यनाभं मैनाकमुवाच गिरिसत्तमम् ।
त्वमिहासुरसंघानां पातालतलवासिनाम् ॥

देवराज्ञा गिरिश्रेष्ठ परिघः संनिवेशितः ।
त्वमेषां ज्ञातवीर्याणां पुनरेवोत्पातिष्यताम् ॥

पातालस्याप्रमेयस्य द्वारमावृत्य तिष्ठसि ।
तिर्यगूर्ध्वमधश्चैव शक्तिस्ते शैल वर्धितुम् ॥

तस्मात्संचोदयामि त्वामुत्तिष्ठ नगसत्तम ।
स एष कपिशार्दूलस्त्वामुपैष्यति वीर्यवान् ॥

हनूमान्रामकार्यार्थं भीमकर्मा समाप्लुतः ।
अस्य साह्यं मया कार्यमिक्ष्वाकुहितवर्तिनः ॥

मम हीक्ष्वाकवः पूज्याः परं पूज्यतमास्तव ।
कुरु साचिव्यमस्माकं न नः कार्यमतिक्रमेत् ॥

कर्तव्यमकृतं कार्यं सतां मन्युमुदीरयेत् ।
सलिलादूर्ध्वमुत्तिष्ठ तिष्ठत्वेष कपिस्त्वयि ॥

अस्माकमतिथिश्चैव पूज्यश्च प्लवतां वरः ।
चामीकर महानाभ देवगन्धर्वसेवित ॥१०३॥

हनूमांस्त्वयि विश्रान्तस्ततः शेषं गमिष्यति ।
काकुत्स्थस्यानृशंस्यं च मैथिल्याश्च विवासनम् ॥

श्रमं च प्लवगेन्द्रस्य समीक्ष्योत्थातुमर्हसि ।
हिरण्यनाभो मैनाको निशम्य लवणाम्भसः ॥

उत्पपात जलात्तूर्णं महाद्रुमलतायुतः ।
स सागरजलं भित्त्वा बभूवाभ्युत्थितस्तदा ॥

यथा जलधरं भित्त्वा दीप्तरश्मिर्दिवाकरः ।
स महात्मा मुहूर्तेन पर्वतः सलिलावृतः ॥

दर्शयामास शृङ्गाणि सागरेण नियोजितः ।
शातकुम्भमयैः शृङ्गैः सकिन्नरमहोरगैः ॥१०८॥

आदित्योदयसंकाशैरालिखद्भिरिवाम्बरम् ।
तप्तजाम्बूनदैः शृङ्गैः पर्वतस्य समुत्थितैः ॥

आकाशं शस्त्रसंकाशमभवत्काञ्चनप्रभम् ।
जातरूपमयैः शृङ्गैर्भ्राजमानैः स्वयंप्रभैः ॥

आदित्यशतसंकाशः सोऽभवद्गिरिसत्तमः ।
तमुत्थितमसङ्गेन हनूमानग्रतः स्थितम् ॥१११॥

मध्ये लवणतोयस्य विघ्नोऽयमिति निश्चितः ।
स तमुच्छ्रितमत्यर्थं महावेगो महाकपिः ॥११२॥

उरसा पातयामास जीमूतमिव मारुतः ।
स तथा पातितस्तेन कपिना पर्वतोत्तमः ॥

बुद्ध्वा तस्य कपेर्वेगं जहर्ष च ननाद च ।
तमाकाशगतं वीरमाकाशे समवस्थितः ॥११४॥

प्रीतो हृष्टमना वाक्यमब्रवीत्पर्वतः कपिम् ।
मानुषं धारयन्रूपमात्मनः शिखरे स्थितः ॥

दुष्करं कृतवान्कर्म त्वमिदं वानरोत्तम
निपत्य मम शृङ्गेषु विश्रमस्व यथासुखम् ॥

राघवस्य कुले जातैरुदधिः परिवर्धितः ।
स त्वां रामहिते युक्तं प्रत्यर्चयति सागरः ॥

कृते च प्रतिकर्तव्यमेष धर्मः सनातनः ।
सोऽयं त्वत्प्रतिकारार्थी त्वत्तः संमानमर्हति ॥

त्वन्निमित्तमनेनाहं बहुमानात्प्रचोदितः ।
योजनानां शतं चापि कपिरेष समाप्लुतः ॥

तव सानुषु विश्रान्तः शेषं प्रक्रमतामिति ।
तिष्ठ त्वं हरिशार्दूल मयि विश्रम्य गम्यताम् ॥

तदिदं गन्धवत्स्वादु कन्दमूलफलं बहु ।
तदास्वाद्य हरिश्रेष्ठ विश्रम्य श्वो गमिष्यसि ॥

अस्माकमपि संबन्धः कपिमुख्य त्वयास्ति वै ।
प्रख्यातस्त्रिषु लोकेषु महागुणपरिग्रहः ॥१२२॥

वेगवन्तः प्लवन्तो ये प्लवगा मारुतात्मज ।
तेषां मुख्यतमं मन्ये त्वामहं कपिकुञ्जर ॥

अतिथिः किल पूजार्हः प्राकृतोऽपि विजानता ।
धर्मं जिज्ञासमानेन किं पुनर्यादृशो भवान् ॥

त्वं हि देववरिष्ठस्य मारुतस्य महात्मनः ।
पुत्रस्तस्यैव वेगेन सदृशः कपिकुञ्जर ॥१२८॥

पूजिते त्वयि धर्मज्ञ पूजां प्राप्नोति मारुतः ।
तस्मात्त्वं पूजनीयो मे शृणु चाप्यत्र कारणम् ॥

पूर्वं कृतयुगे तात पर्वताः पक्षिणोऽभवन् ।
तेऽभिजग्मुर्दिशः सर्वा गरुडानिलवेगिनः ॥

ततस्तेषु प्रयातेषु देवसंघाः सहर्षिभिः ।
भूतानि च भयं जग्मुस्तेषां पतनशङ्कया ॥

ततः क्रुद्धः सहस्राक्षः पर्वतानां शतक्रतुः ।
पक्षांश्चिच्छेद वज्रेण तत्र तत्र सहस्रशः ॥

स मामुपगतः क्रुद्धो वज्रमुद्यम्य देवराट् ।
ततोऽहं सहसा क्षिप्तः श्वसनेन महात्मना ॥

अस्मिँल्लवणतोये च प्रक्षिप्तः प्लवगोत्तम ।
गुप्तपक्षः समग्रश्च तव पित्राभिरक्षितः ॥

ततोऽहं मानयामि त्वां मान्यो हि मम मारुतः ।
त्वया मे ह्येष संबन्धः कपिमुख्य महागुणः ॥

अस्मिन्नेवंविधे कार्ये सागरस्य ममैव च ।
प्रीतिं प्रीतमनाः कर्तुं त्वमर्हसि महाकपे ॥

श्रमं मोचय पूजां च गृहाण कपिसत्तम ।
प्रीतिं च बहुमन्यस्व प्रीतोऽस्मि तव दर्शनात् ॥

एवमुक्तः कपिश्रेष्ठस्तं नगोत्तममब्रवीत् ।
प्रीतोऽस्मि कृतमातिथ्यं मन्युरेषोऽपनीयताम् ॥

त्वरते कार्यकालो मे अहश्च व्यतिवर्तते ।
प्रतिज्ञा च मया दत्ता न स्थातव्यमिहान्तरा ॥

इत्युक्त्वा पाणिना शैलमालभ्य हरिपुंगवः ।
जगामाकाशमाविश्य वीर्यवान्प्रहसन्निव ॥

स पर्वतसमुद्राभ्यां बहुमानादवेक्षितः ।
पूजितश्चोपपन्नाभिराशीर्भिरनिलात्मजः ॥

अथोर्ध्वं दूरमुत्पत्य हित्वा शैलमहार्णवौ।
पितुः पन्थानमास्थाय जगाम विमलेऽम्बरे॥

ततश्चोर्ध्वंगतिं प्राप्य गिरिं तमवलोकयन्।
वायुसूनुर्निरालम्बे जगाम विमलेऽम्बरे॥

द्वितीयं हनुमत्कर्म दृष्ट्वा तत्र सुदुष्करम्।
प्रशशंसुः सुराः सर्वे सिद्धाश्च परमर्षयः॥

देवताश्चाभवन्हृष्टास्तत्रस्थास्तस्य कर्मणा।
काञ्चनस्य सुनाभस्य सहस्राक्षश्च वासवः॥

उवाच वचनं श्रीमान्परितोषात्सगद्गदम्।
सुनाभं पर्वतश्रेष्ठं स्वयमेव शचीपतिः॥१४३॥

हिरण्यनाभ शैलेन्द्र परितुष्टोऽस्मि ते भृशम्।
अभयं ते प्रयच्छामि तिष्ठ सौम्य यथासुखम्॥

साह्यं कृतं त्वया सौम्य विक्रान्तस्य हनूमतः।
क्रमतो योजनशतं निर्भयस्य भये सति

रामस्यैष हि दौत्येन याति दाशरथेर्हरिः
सत्क्रियां कुर्वता तस्य तोषितोऽस्मि भृशं त्वया॥

ततः प्रहर्षमगमद्विपुलं पर्वतोत्तमः ।
देवतानां पतिं दृष्ट्वा परितुष्टं शतक्रतुम् ॥

स वै दत्तवरः शैलो बभूवावस्थितस्तदा ।
हनूमांश्च मुहूर्तेन व्यतिचक्राम सागरम् ॥

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
अब्रुवन्सूर्यसंकाशां सुरसां नागमातरम् ॥

अयं वातात्मजः श्रीमान्प्लवते सागरोपरि ।
हनूमान्नाम तस्य त्वं मुहूर्तं विघ्नमाचर ॥१५०॥

राक्षसं रूपमास्थाय सुघोरं पर्वतोपमम् ।
दंष्ट्राकरालं पिङ्गाक्षं वक्त्रं कृत्वा नभःसमम् ॥

बलमिच्छामहे ज्ञातुं भूयश्चास्य पराक्रमम् ।
त्वां विजेष्यत्युपायेन विषादं वा गमिष्यति ॥

एवमुक्ता तु सा देवी दैवतैरभिसत्कृता ।
समुद्रमध्ये सुरसा बिभ्रती राक्षसं वपुः ॥

विकृतं च विरूपं च सर्वस्य च भयावहम् ।
प्लवमानं हनूमन्तमावृत्येदमुवाच ह ॥ १५४ ॥

मम भक्ष्यः प्रदिष्टस्त्वममरैर्वानरर्षभ ।
अहं त्वां भक्षयिष्यामि प्रविशेदं ममाननम् ॥

एवमुक्तः सुरसया प्राञ्जलिर्वानरर्षभः ।
प्रहृष्टवदनः श्रीमान्सुरसां वाक्यमब्रवीत् ॥

रामो दाशरथिः श्रीमान्प्रविष्टो दण्डकावनम् ।
लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया ॥

अन्यकार्यविषक्तस्य बद्धवैरस्य राक्षसैः ।
तस्य सीता हृता भार्या रावणेन तपस्विनी ॥

तस्याः सकाशं दूतोऽहं गमिष्ये रामशासनात् ।
कर्तुमर्हसि रामस्य साह्यं विषयवासिनि ॥

अथ वा मैथिलीं दृष्ट्वा रामं चाक्लिष्टकारिणम् ।
आगमिष्यामि ते वक्त्रं सत्यं प्रतिशृणोमि ते ॥

एवमुक्ता हनुमता सुरसा कामरूपिणी ।
तं प्रयान्तं समुद्वीक्ष्य सुरसा वाक्यमब्रवीत् ॥

बलं जिज्ञासमाना वै नागमाता हनूमतः ।
प्रविश्य वदनं मेऽद्य गन्तव्यं वानरोत्तम ॥

प्रविश्य वदनं मेऽद्य गन्तव्यं वानरोत्तम ।
वर एष पुरा दत्तो मम धात्रेति सत्वरा ॥

व्यादाय वक्त्रं विपुलं स्थिता सा मारुतेः पुरः ।
एवमुक्तः सुरसया क्रुद्धो वानरपुंगवः ॥१६४॥

अब्रवीत्कुरु वै वक्त्रं येन मां विषहिष्यसे ।
इत्युक्त्वा सुरसा क्रुद्धा दशयोजनमायता ॥

दशयोजनविस्तारो बभूव हनुमांस्तदा ।
तं दृष्ट्वा मेघसंकाशं दशयोजनमायतम् ॥१६६॥

चकार सुरसाप्यास्यं विंशद्योजनमायतम् ।
ततः परं हनूमांस्तु त्रिंशद्योजनमायतः ॥१६७॥

चकार सुरसा वक्त्रं चत्वारिंशत्तथायतम् ।
बभूव हनुमान्वीरः पञ्चाशद्योजनोच्छ्रितः ॥

चकार सुरसा वक्त्रं षष्टियोजनमायतम् ।
तथैव हनुमान्वीरः सप्ततीयोजनोच्छ्रितः ॥

चकार सुरसा वक्त्रमशीतीयोजनायतम् ।
हनूमानचलप्रख्यो नवतीयोजनोच्छ्रितः ॥

चकार सुरसा वक्त्रं शतयोजनमायतम् ।
तद्दृष्ट्वा व्यादितं चास्यं वायुपुत्रः सुबुद्धिमान् ॥

दीर्घजिह्वं सुरसया सुघोरं नरकोपमम् ।
स संक्षिप्यात्मनः कायं जीमूत इव मारुतिः ॥

तन्मुहूर्तेन हनुमान्बभूवाङ्गुष्ठमात्रकः ।
सोऽभिपत्याशु तद्वक्त्रं निष्पत्य च महाबलः ॥

अन्तरिक्षे स्थितः श्रीमान्प्रहसन्निदमब्रवीत् ।
प्रविष्टोऽस्मि हि ते वक्त्रं दाक्षायणि नमोऽस्तु ते ॥

गमिष्ये यत्र वैदेही सत्यश्चास्तु वरस्तव ।
तं दृष्ट्वा वदनान्मुक्तं चन्द्रं राहुमुखादिव ॥

अब्रवीत्सुरसा देवी स्वेन रूपेण वानरम् ।
अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् ॥

समानय च वैदेहीं राघवेण महात्मना ।
तत्तृतीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् ॥

साधु साध्विति भूतानि प्रशशंसुस्तदा हरिम् ।
स सागरमनाधृष्यमभ्येत्य वरुणालयम् ॥

अगाधाकाशमाविश्य वेगेन गरुडोपमः ।
सेविते वारिधाराभिः पन्नगैश्च निषेविते ॥

चरिते कौशिकाचार्यैरैरावतनिषेविते ।
सिंहकुञ्जरशार्दूलपतगोरगवाहनैः ॥ १८० ॥

विमानैः संपतद्भिश्च विमलैः समलङ्कृते ।
वज्राशनिसमाघातैः पावकैरुपशोभिते ॥१८१॥

कृतपुण्यैर्महाभागैः स्वर्गजिद्भिरलंकृते ।
वहता हव्यमत्यर्थं सेविते चित्रभानुना ॥

ग्रहनक्षत्रचन्द्रार्कतारागणनिषेविते ।
महर्षिगणगन्धर्वनागयक्षसमाकुले ॥ १८३ ॥

विविक्ते विमले विश्वे विश्वावसुनिषेविते ।
देवराजगजाक्रान्ते चन्द्रसूर्यपथे शिवे ॥१८४॥

विताने जीवलोकस्य वितते ब्रह्मनिर्मिते ।
बहुशः सेविते वीरैर्विद्याधरगणैर्वरैः ॥ १८५ ॥

जगाम वायुमार्गे च गरुत्मानिव मारुतिः ।
हनूमान्मेघजालानि प्रकर्षन्मारुतो यथा ॥

कालागुरुसवर्णानि रक्तपीतसितानि च ।
कपिना कृष्यमाणानि महाभ्राणि चकाशिरे ॥

प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ।
प्रावृषीन्दुरिवाभाति निष्पतन्प्रविशंस्तदा ॥

प्रदृश्यमानः सर्वत्र हनुमान्मारुतात्मजः ।
भेजेऽम्बरं निरालम्बं लम्बपक्ष इवाद्रिराट् ॥

प्लवमानं तु तं दृष्ट्वा सिंहिका नाम राक्षसी ।
मनसा चिन्तयामास प्रवृद्धा कामरूपिणी ॥

अद्य दीर्घस्य कालस्य भविष्याम्यहमाशिता ।
इदं हि मे महत्सत्त्वं चिरस्य वशमागतम् ॥

इति संचिन्त्य मनसा छायामस्य समाक्षिपत् ।
छायायां संगृहीतायां चिन्तयामास वानरः ॥

समाक्षिप्तोऽस्मि सहसा पङ्गूकृतपराक्रमः ।
प्रतिलोमेन वातेन महानौरिव सागरे ॥

तिर्यगूर्ध्वमधश्चैव वीक्षमाणः समन्ततः ।
ददर्श स महासत्त्वमुत्थितं लवणाम्भसः ॥

तां दृष्ट्वा चिन्तयामास मारुतिर्विकृताननाम् ।
कपिराज्ञा यदाख्यातं सत्त्वमद्भुतदर्शनम् ॥

छायाग्राहि महावीर्यं तदिदं नात्र संशयः ।
स तां बुद्ध्वार्थतत्त्वेन सिंहिकां मतिमान्कपिः ॥

व्यवर्धत महाकायः प्रावृषीव बलाहकः ।
तस्य सा कायमुद्वीक्ष्य वर्धमानं महाकपेः ॥

वक्त्रं प्रसारयामास पाताळतलसंनिभम् ।
घनराजीव गर्जन्ती वानरं समभिद्रवत् ॥१९८॥

स ददर्श ततस्तस्या विवृतं सुमहन्मुखम् ।
कायमात्रं च मेधावी मर्माणि च महाकपिः ॥

स तस्या विवृते वक्त्रे वज्रसंहननः कपिः ।
संक्षिप्य मुहुरात्मानं निष्पपात महाबलः ॥

आस्ये तस्या निमज्जन्तं ददृशुः सिद्धचारणाः ।
ग्रस्यमानं यथा चन्द्रं पूर्णं पर्वणि राहुणा ॥

ततस्तस्या नखैस्तीक्ष्णैर्मर्माण्युत्कृत्य वानरः ।
उत्पपाताथ वेगेन मनःसंपातविक्रमः ॥२०२॥

तां तु दृष्ट्वा च धृत्या च दाक्षिण्येन निपात्य हि ।
स कपिप्रवरो वेगाद्ववृधे पुनरात्मवान् ॥२०३॥

हृतहृत्सा हनुमता पपात विधुराम्भसि ।
तां हतां वानरेणाशु पतितां वीक्ष्य सिंहिकाम् ॥

भूतान्याकाशचारीणि तमूचु प्लवगर्षभम् ।
भीममद्य कृतं कर्म महत्सत्त्व त्वया हतम् ॥

साधयार्थमभिप्रेतमरिष्टं गच्छ मारुते ।
यस्य त्वेतानि चत्वारि वानरेन्द्र यथा तव ॥

धृतिर्दृष्टिर्मतिर्दाक्ष्यं स कर्मसु न सीदति ।
स तैः सम्भावितः पूज्यैः प्रतिपन्नप्रयोजनः ॥

जगामाकाशमाविश्य पन्नगाशनवत्कपिः ।
प्राप्तभूयिष्ठपारस्तु सर्वतः प्रतिलोकयन् ॥

योजनानां शतस्यान्ते वनराजिं ददर्श सः ।
ददर्श च पतन्नेव विविधद्रुमभूषितम् ॥ २०९ ॥

द्वीपं शाखामृगश्रेष्ठो मलयोपवनानि च ।
सागरं सागरानूपं सागरानूपजान्द्रुमान् ॥

सागरस्य च पत्नीनां मुखान्यपि विलोकयन् ।
स महामेघसंकाशं समीक्ष्यात्मानमात्मवान् ॥

निरुन्धन्तमिवाकाशं चकार मतिमान्मतिम् ।
कायवृद्धिं प्रवेगं च मम दृष्ट्वैव राक्षसाः ॥

मयि कौतूहलं कुर्युरिति मेने महाकपिः ।
ततः शरीरं संक्षिप्य तन्महीधरसंनिभम् ॥

पुनः प्रकृतिमापेदे वीतमोह इवात्मवान् ।
तद्रूपमतिसंक्षिप्य हनूमान्प्रकृतौ स्थितः ।
त्रीन्क्रमानिव विक्रम्य बलिवीर्यहरो हरिः ॥

स चारुनानाविधरूपधारी
परं समासाद्य समुद्रतीरम् ।
परैरशक्यः प्रतिपन्नरूपः
समैक्षतासौ समवेक्षितार्थः ॥ २१५ ॥

ततः स लम्बस्य गिरेः समृद्धे
विचित्रकूटे निपपात कूटे ।
सकेतकोद्दालकनारिकेले
महाद्रिकूटप्रतिमो महात्मा ॥ २१६ ॥

ततस्तु संप्राप्य समुद्रतीरं
समीक्ष्य लंकां गिरिराजमूर्ध्नि ।
कपिस्तु तस्मिन्निपपात पर्वते
विधूय रूपं व्यथयन्मृगद्विजान् ॥२१७॥

स सागरं दानवपन्नगायुतं
बलेन विक्रम्य महोर्मिमालिनम् ।
निपत्य तीरे च महोदधेस्तदा
ददर्श लङ्कामरावतीमिव ॥ २१८ ॥

इति प्रथमः सर्गः ॥

—*—

## द्वितीयः सर्गः ॥

—*—

स सागरमनाधृष्यमतिक्रम्य महाबलः ।
त्रिकूटशिखरे लङ्कां स्थितां स्वस्थो ददर्श ह ॥

ततः पादपमुक्तेन पुष्पवर्षेण वीर्यवान् ।
अभिवृष्टः स्थितस्तत्र बभौ पुष्पमयो यथा ॥

योजनानां शतं श्रीमांस्तीर्त्वाप्यमितविक्रमः ।
अनिःश्वसन्कपिस्तत्र न ग्लानिमधिगच्छति ॥

शतान्यहं योजनानां क्रमेयं सुबहून्यपि ।
किं पुनः सागरस्यान्तं संख्यातं शतयोजनम् ॥

स तु वीर्यवतां श्रेष्ठः प्लवतामपि चोत्तमः ।
जगाम वेगवाँल्लङ्कां लङ्घयित्वा महोदधिम् ॥५॥

शाद्वलानि च नीलानि गन्धवन्ति वनानि च ।
पुष्पवन्ति च मध्येन जगाम नगवन्ति च ॥

शैलांश्च तरुभिश्छन्नान्वनराजीश्च पुष्पिताः ।
अभिचक्राम तेजस्वी हनूमान्प्लवगर्षभ ॥ ७ ॥

स तस्मिन्नचले तिष्ठन्वनान्युपवनानि च ।
स नगाग्रे च तां लङ्कां ददर्श पवनात्मज ॥८॥

सरलान्कर्णिकारांश्च खर्जूरांश्च सुपुष्पितान् ।
प्रियालान्मुचुलिन्दांश्च कुटजान्केतकानपि ॥९॥

प्रियङ्गून्गन्धपूर्णांश्च नीपान्सप्तच्छदांस्तथा ।
असनान्कोविदारांश्च करवीरांश्च पुष्पितान् ॥

पुष्पभारनिबद्धांश्च तथा मुकुलितानपि।
पादपान्विहगाकीर्णान्पवनाधूतमस्तकान्॥

हंसकारण्डवाकीर्णा वापीः पद्मोत्पलावृताः।
आक्रीडान्विविधान्रम्यान्विविधांश्च जलाशयान्

सततान्विविधैर्वृक्षैः सर्वर्तुफलपुष्पितैः।
उद्यानानि च रम्याणि ददर्श कपिकुञ्जरः॥

समासाद्य च लक्ष्मीवाँल्लङ्कां रावणपालिताम्।
परिखाभि सपद्माभिः सोत्पलाभिरलंकृताम्॥

सीतापहरणार्थेन रावणेन सुरक्षिताम्।
समन्ताद्विचरद्भिश्च राक्षसैः कामरूपिभिः॥

काञ्चनेनावृतां रम्यां प्राकारेण महापुरीम्।
गृहैश्च गिरिसंकाशैः शारदाम्बुदसन्निभैः॥१६॥

पाण्डुराभिः प्रतोलीभिः श्लिष्टाभिरभिसंवृताम्।
अट्टालकशताकीर्णां पताकाध्वजमालिनीम्॥

तोरणैः काञ्चनैर्दीप्तां लतापङ्क्तिविचित्रितैः।
ददर्श हनुमाँल्लङ्कां दिवि देवपुरीमिव॥ १८॥

गिरिमूर्ध्नि स्थितां लङ्कां पाण्डुरैर्भवनैः शुभाम् ।
स ददर्श कपिः श्रीमान्पुरमाकाशगं यथा ॥

पालितां राक्षसेन्द्रेण निर्मितां विश्वकर्मणा ।
प्लवमानामिवाकाशे ददर्श हनुमान्पुरीम् ॥२०॥

वप्रप्राकारजघनां विपुलाम्बुनवाम्बराम् ।
शतघ्नीशूलकेशान्तामट्टालकवतंसकाम् ॥ २१ ॥

मनसेव कृतां लङ्कां निर्मितां विश्वकर्मणा ।
द्वारमुत्तरमासाद्य चिन्तयामास वानरः ॥ २२॥

कैलासशिखरप्रख्यैरालिखन्तीमिवाम्बरम् ।
पिबन्तीमिव चाकाशमुच्छ्रितैर्भवनोत्तमैः ॥२३॥

संपूर्णां राक्षसैर्घोरैर्नागैर्भोगवतीमिव ।
अचिन्त्यां सुकृतां स्पष्टां कुबेराध्युषितां पुरा ॥

दंष्ट्रिभिर्बहुभिः शूरैः शूलपट्टिशपाणिभिः ।
रक्षितां राक्षसैर्घोरैर्गुहामाशीविषैरिव ॥ २५ ॥

तस्याश्च महतीं गुप्तिं सागरं च समीक्ष्य सः ।
रावणं च रिपुं घोरं चिन्तयामास वानरः ॥

आगत्यापीह हरयो भविष्यन्ति निरर्थकाः ।
न हि युद्धेन वै लङ्का शक्या जेतुं सुरासुरैः ॥

इमां तु विषमां दुर्गां लङ्कां रावणपालिताम् ।
प्राप्यापि स महाबाहुः किं करिष्यति राघवः ॥

अवकाशो न सान्त्वस्य राक्षसेष्वभिगम्यते ।
न दानस्य न भेदस्य नैव युद्धस्य दृश्यते ॥

चतुर्णामेव हि गतिर्वानराणां महात्मनाम् ।
वालिपुत्रस्य नीलस्य मम राज्ञश्च धीमतः ॥

यावज्जानामि वैदेहीं यदि जीवति वा न वा ।
तत्रैव चिन्तयिष्यामि दृष्ट्वा तां जनकात्मजाम् ॥

ततः स चिन्तयामास मुहूर्तं कपिकुञ्जरः
गिरिशृङ्गे स्थितस्तस्मिन्रामस्याभ्युदये रतः ॥

अनेन रूपेण मया न शक्या रक्षसां पुरी ।
प्रवेष्टुं राक्षसैर्गुप्ता क्रूरैर्बलसमन्वितैः ॥ ३३ ॥

उग्रौजसो महावीर्या बलवन्तश्च राक्षसाः ।
वञ्चनीया मया सर्वे जानकीं परिमार्गता ॥

लक्ष्यालक्ष्येण रूपेण रात्रौ लङ्कापुरी मया ।
प्रवेष्टुं प्राप्तकालं मे कृत्यं साधयितुं महत् ॥

तां पुरीं तादृशीं दृष्ट्वा दुराधर्षां सुरासुरैः ।
हनुमांश्चिन्तयामास विनिःश्वस्य मुहुर्मुहुः ॥

केनोपायेन पश्येयं मैथिलीं जनकात्मजाम् ।
अदृष्टो राक्षसेन्द्रेण रावणेन दुरात्मना ॥३७॥

न विनश्येत्कथं कार्यं रामस्य विदितात्मनः ।
एकामेकस्तु पश्येयं रहिते जनकात्मजाम् ॥

भूताश्चार्था विपद्यन्ते देशकालविरोधिताः ।
विक्लवं दूतमासाद्य तमः सूर्योदये यथा ॥३९॥

अर्थानर्थान्तरे बुद्धिर्निश्चितापि न शोभते ।
घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ॥

न विनश्येत्कथं कार्यं वैक्लव्यं न कथं भवेत् ।
लङ्घनं च समुद्रस्य कथं नु न भवेद्वृथा ॥४१॥

मयि दृष्टे तु रक्षोभी रामस्य विदितात्मनः ।
भवेद्व्यर्थमिदं कार्यं रावणानर्थमिच्छतः ॥४२॥

न हि शक्यं क्वचित्स्थातुमविज्ञातेन राक्षसैः ।
अपि राक्षसरूपेण किमुतान्येन केनचित् ॥ ४३ ॥

वायुरप्यत्र नाज्ञातश्चरेदिति मतिर्मम ।
न ह्यस्त्यविदितं किंचिद्राक्षसानां बलीयसाम् ॥

इहाहं यदि तिष्ठामि स्वेन रूपेण संवृतः ।
विनाशमुपयास्यामि भर्तुरर्थश्च हास्यते ॥ ४५ ॥

तदहं स्वेन रूपेण रजन्यां ह्रस्वतां गतः ।
लङ्कामभिगमिष्यामि राघवस्यार्थसिद्धये ॥ ४६ ॥

रावणस्य पुरीं रात्रौ प्रविश्य सुदुरासदाम् ।
विचिन्वन्भवनं सर्वं द्रक्ष्यामि जनकात्मजाम् ॥

इति निश्चित्य हनुमान्सूर्यस्यास्तमयं कपिः ।
आचकाङ्क्षे तदा वीरो वैदेह्या दर्शनोत्सुकः ॥

सूर्ये चास्तं गते रात्रौ देहं संक्षिप्य मारुतिः ।
पृषदंशकमात्रः सन्बभूवाद्भुतदर्शनः ॥ ४९ ॥

प्रदोषकाले हनुमांस्तूर्णमुत्प्लुत्य वीर्यवान् ।
प्रविवेश पुरीं रम्यां सुविभक्तमहापथाम् ॥ ५० ॥

प्रासादमालाविततां स्तम्भैः काञ्चनराजतैः ।
शातकुम्भमयैर्जालैर्गन्धर्वनगरोपमाम् ॥ ५१ ॥

सप्तभौमाष्टभौमैश्च स ददर्श महापुरीम् ।
तलैः स्फटिकसंकीर्णैः कार्तस्वरविभूषितैः ॥

वैडूर्यमणिचित्रैश्च मुक्ताजालविराजितैः ।
तलैः शुशुभिरे तानि भवनान्यत्र रक्षसाम् ॥

काञ्चनानि विचित्राणि तोरणानि च रक्षसाम् ।
लङ्कामुद्द्योतयामासु सर्वतः समलंकृताम् ॥

अचिन्त्यामद्भुताकारां दृष्ट्वा लङ्कां महाकपिः ।
आसीद्विषण्णो हृष्टश्च वैदेह्या दर्शनोत्सुकः ॥५२॥

स पाण्डुरोद्धविमानमालिनीं
महार्हजाम्बूनदजालतोरणाम् ।
यशस्विनीं रावणबाहुपालितां
क्षपाचरैर्भीमबलैः समावृताम् ॥ ५३ ॥

चन्द्रोऽपि साचिव्यमिवास्य कुर्व-
स्तारागणैर्मध्यगतो विराजन् ।

ज्योत्स्नावितानेन वितत्य लोक-
मुत्तिष्ठते नैकसहस्ररश्मिः ॥ ५७ ॥

शङ्खप्रभं क्षीरमृणालवर्ण-
मुद्गच्छमानं व्यवभासमानम् ।
ददर्श चन्द्रं स कपिप्रवीरः
पोप्लूयमानं सरसीव हंसम् ॥ ५८ ॥

इति द्वितीय सर्ग ॥

— ❀ —

तृतीयः सर्गः ॥

— ✱ —

स लम्बशिखरे लम्बे लम्बतोयदसंनिभे ।
सत्त्वमास्थाय मेधावी हनुमान्मारुतात्मजः ॥१॥

निशि लङ्कां महासत्त्वो विवेश कपिकुञ्जरः ।
रम्यकाननतोयाढ्यां पुरीं रावणपालिताम् ॥

शारदाम्बुधरप्रख्यैर्भवनैरुपशोभिताम् ।
सागरोपमनिर्घोषां सागरानिलसेविताम् ॥३॥

सुपुष्टबलसंगुप्तां यथैव विटपावतीम् ।
चारुतोरणनिर्यूहां पाण्डुरद्वारतोरणाम् ॥ ४ ॥

भुजगाचरितां गुप्तां शुभां भोगवतीमिव ।
तां सविद्युद्घनाकीर्णां ज्योतिर्मार्गनिषेविताम् ॥

चण्डमारुतनिर्ह्रादां यथा चाप्यमरावतीम् ।
शातकुम्भेन महता प्राकारेणाभिसंवृताम् ॥६॥

किंकिणीजालघोषाभिः पताकाभिरलंकृताम् ।
आसाद्य सहसा हृष्टः प्राकारमभिपेदिवान् ॥

विस्मयाविष्टहृदयः पुरीमालोक्य सर्वतः ।
जाम्बूनदमयैर्द्वारैर्वैदूर्यकृतवेदिकैः ॥ ८ ॥

वज्रस्फटिकमुक्ताभिर्मणिकुट्टिमभूषितैः ।
तप्तहाटकनिर्यूहै राजतामलपाण्डुरैः ॥ ९ ॥

वैदूर्यतलसोपानैः स्फाटिकान्तरपांसुभिः ।
चारुसंजवनोपेतैः खमिवोत्पतितैः शुभैः ॥१०॥

क्रौञ्चबर्हिणसंघुष्टे राजहंसनिषेवितैः ।
तूर्याभरणनिर्घोषैः सर्वतः प्रतिनादिताम् ॥

वस्वोकसाराप्रतिमां समीक्ष्य नगरीं ततः ।
खमिवोत्पतितां लङ्कां जहर्ष हनुमान्कपिः ॥

तां समीक्ष्य पुरीं लङ्कां राक्षसाधिपतेः शुभाम् ।
अनुत्तमामृद्धिमतीं चिन्तयामास वीर्यवान् ॥

नेयमन्येन नगरी शक्या धर्षयितुं बलात् ।
रक्षिता रावणबलैरुद्यतायुधधारिभिः ॥ १४ ॥

कुमुदाङ्गदयोर्वापि सुषेणस्य महाकपेः ।
प्रसिद्धेयं भवेद्भूमिर्मैन्दद्विविदयोरपि ॥ १५ ॥

विवस्वतस्तनूजस्य हरेश्च कुशपर्वणः ।
ऋक्षस्य केतुमालस्य मम चैव गतिर्भवेत् ॥

समीक्ष्य च महाबाहू राघवस्य पराक्रमम् ।
लक्ष्मणस्य च विक्रान्तमभवत्प्रीतिमान्कपिः ॥

तां रत्नवसनोपेतां गोष्ठागारावतंसकाम् ।
यन्त्रागारस्तनीमृद्धां प्रमदामिव भूषिताम् ॥

तां नष्टतिमिरां दीपैर्भास्वरैश्च महागृहैः ।
नगरीं राक्षसेन्द्रस्य ददर्श स महाकपिः ॥

अथ सा हरिशार्दूलं प्रविशन्तं महाबलम् ।
नगरी स्वेन रूपेण ददर्श पवनात्मजम् ॥२०॥

सा तं हरिवरं दृष्ट्वा लङ्का वै कामरूपिणी ।
स्वयमेवोत्थिता तत्र विकृताननदर्शना ॥ २१ ॥

पुरस्तात्तस्य वीरस्य वायुसूनोरतिष्ठत ।
मुञ्चमाना महानादमब्रवीत्पवनात्मजम् ॥२२॥

कस्त्वं केन च कार्येण इह प्राप्तो वनालय ।
कथयस्वेह तत्त्वेन यावत्प्राणान्धरिष्यसि ॥

न शक्या खल्वियं लङ्का प्रवेष्टुं वानर त्वया ।
रक्षिता रावणबलैरभिगुप्ता समन्ततः ॥ २४ ॥

अथ तामब्रवीद्वीरो हनुमानग्रतः स्थिताम् ।
कथयिष्यामि ते तत्त्वं यन्मां त्वं परिपृच्छसि ॥

का त्वं विरूपनयना पुरद्वारेऽवतिष्ठसे ।
किमर्थं चापि मां रुद्ध्वा निर्भर्त्सयसि दारुणम् ॥

हनुमद्वचनं श्रुत्वा लङ्का सा कामरूपिणी ।
उवाच वचनं क्रुद्धा परुषं पवनात्मजम् ॥ २७ ॥

अहं राक्षसराजस्य रावणस्य महात्मनः ।
आज्ञाप्रतीक्षा दुर्धर्षा रक्षामि नगरीमिमाम् ॥

न शक्यं मामवज्ञाय प्रवेष्टुं नगरी त्वया ।
अद्य प्राणैः परित्यक्तः स्वप्स्यसे निहतो मया ॥

अहं हि नगरी लङ्का स्वयमेव प्लवंगम ।
सर्वतः परिरक्षामि ह्येतत्ते कथितं मया ॥३०॥

लङ्काया वचनं श्रुत्वा हनूमान्मारुतात्मजः ।
यत्नवान्स हरिश्रेष्ठः स्थितः शैल इवापरः ॥

स तां स्त्रीरूपविकृतां दृष्ट्वा वानरपुंगवः ।
आबभाषेऽथ मेधावी सत्त्ववान्प्लवगर्षभः ॥

द्रक्ष्यामि नगरीं लङ्कां साट्टप्राकारतोरणाम् ।
तदर्थमिह संप्राप्तः परं कौतूहलं हि मे ॥ ३३ ॥

वनान्युपवनानीह लङ्कायाः काननानि च ।
सर्वतो गृहमुख्यानि द्रष्टुमागमनं हि मे ॥३४॥

तस्य तद्वचनं श्रुत्वा लङ्का सा कामरूपिणी ।
भूय एव पुनर्वाक्यं बभाषे परुषाक्षरम् ॥३५॥

मामनिर्जित्य दुर्बुद्धे राक्षसेश्वरपालिता ।
न शक्यमद्य ते द्रष्टुं पुरीयं वानराधम ॥३६॥

ततः स हरिशार्दूलस्तामुवाच निशाचरीम् ।
दृष्ट्वा पुरीमिमां भद्रे पुनर्यास्ये यथागतम् ॥

ततः कृत्वा महानादं सा वै लङ्का भयानकम् ।
तलेन वानरश्रेष्ठं ताडयामास वेगिता ॥ ३८ ॥

ततः स कपिशार्दूलो लङ्कया ताडितो भृशम् ।
ननाद सुमहानादं वीर्यवान्पवनात्मजः ॥३९॥

ततः संवर्तयामास वामहस्तस्य सोऽङ्गुलीः ।
मुष्टिनाभिजघानैनां हनूमान्क्रोधमूर्छितः ॥४०॥

स्त्री चेति मन्यमानेन नातिक्रोधः स्वयं कृतः ।
सा तु तेन प्रहारेण विह्वलाङ्गी निशाचरी ॥

पपात सहसा भूमौ विकृताननदर्शना ।
ततस्तु हनूमान्प्राज्ञस्तां दृष्ट्वा विनिपातिताम् ॥

कृपां चकार तेजस्वी मन्यमानः स्त्रियं तु ताम् ।
ततो वै भृशसंविग्ना लङ्का सा गद्गदाक्षरम् ॥

उवाच गर्वितं वाक्यं हनूमन्तं प्लवंगमम् ।
प्रसीद सुमहाबाहो त्रायस्व हरिसत्तम ।४४॥

समये सौम्य तिष्ठन्ति सत्त्ववन्तो महाबलाः ।
अहं तु नगरी लङ्का स्वयमेव प्लवगम ॥ ४५ ॥

निर्जिताहं त्वया वीर विक्रमेण महाबल ।
इदं च तथ्यं शृणु वै ब्रुवन्त्या मे हरीश्वर ॥

स्वयंभुवा पुरा दत्तं वरदानं यथा मम ।
यदा त्वां वानरः कश्चिद्विक्रमाद्वशमानयेत् ॥

तदा त्वया हि विज्ञेयं रक्षसां भयमागतम् ।
स हि मे समयः सौम्य प्राप्तोऽद्य तव दर्शनात् ॥

स्वयंभूविहितः सत्यो न तस्यास्ति व्यतिक्रमः।
सीतानिमित्तं राज्ञस्तु रावणस्य दुरात्मनः ॥

रक्षसां चैव सर्वेषां विनाशः समुपस्थितः
तत्प्रविश्य हरिश्रेष्ठ पुरीं रावणपालिताम् ।
विधत्स्व सर्वकार्याणि यानि यानीह वाञ्छसि ॥

प्रविश्य शापोपहतां हरीश्वर
पुरीं शुभां राक्षसमुख्यपालिताम् ।
दिदृक्षया तं जनकात्मजां सतीं
विमार्गे सर्वत्र गतो यथासुखम् ॥५१॥

इति तृतीयः सर्गः ॥

—*—

चतुर्थः सर्गः ॥

—*—

स निर्जित्य पुरीं श्रेष्ठां लङ्कां तां कामरूपिणीम् ।
विक्रमेण महातेजा हनूमान्कपिसत्तमः ॥ १ ॥

अद्वारेण महाबाहुः प्राकारमभिपुप्लुवे ।
निशि लङ्कां महासत्त्वो विवेश कपिकुञ्जरः ॥

प्रविश्य नगरीं लङ्कां कपिराजहितंकरः ।
चक्रेऽथ पादं सव्यं च शत्रूणां स तु मूर्धनि ॥

प्रविष्टः सत्त्वसंपन्नो निशायां मारुतात्मजः ।
स महापथमास्थाय मुक्तापुष्पविराजितम् ॥४॥

ततस्तु तां पुरीं लङ्कां रम्यामभिययौ कपिः ।
हसितोत्कृष्टनिनदैस्तूर्यघोषपुरःसरैः ॥ ५ ॥

वज्राङ्कुशनिकाशैश्च वज्रजालविभूषितैः ।
गृहमुख्यैः पुरी रम्या बभासे द्यौरिवाम्बुदैः ॥

प्रजज्वाल तदा लङ्का रक्षोगणगृहैः शुभैः ।
सिताभ्रसदृशैश्चित्रैः पद्मस्वस्तिकसंस्थितैः ॥७॥

वर्धमानगृहैश्चापि सर्वतः सुविभूषिता ।
तां चित्रमाल्याभरणां कपिराजहितंकरः ॥८॥

राघवार्थं चरन्श्रीमान्ददर्श च ननन्द च ।
भवनाद्भवनं गच्छन्ददर्श पवनात्मजः ॥ ९ ॥

विविधाकृतिरूपाणि भवनानि ततस्ततः ।
शुश्राव मधुरं गीतं त्रिस्थानस्वरभूषितम् ॥

स्त्रीणां मदसमृद्धानां दिवि चाप्सरसामिव ।
शुश्राव काञ्चीनिनदं नूपुराणां च निःस्वनम् ॥

सोपाननिनदांश्चैव भवनेषु महात्मनाम् ।
आस्फोटितनिनादांश्च क्ष्वेडितांश्च ततस्ततः ॥

शुश्राव जपतां तत्र मन्त्रान्रक्षोगृहेषु वै ।
स्वाध्यायनिरतांश्चैव यातुधानान्ददर्श सः ॥

रावणस्तवसंयुक्तान्गर्जतो राक्षसानपि ।
राजमार्गं समावृत्य स्थितं रक्षोबलं महत् ॥

ददर्श मध्यमे गुल्मे राक्षसस्य चरान्बहून् ।
दीक्षिताञ्जटिलान्मुण्डान्गोऽजिनाम्बरवाससः

दर्भमुष्टिप्रहरणानग्निकुण्डायुधांस्तथा ।
कूटमुद्गरपाणींश्च दण्डायुधधरानपि । १६ ॥

एकाक्षानेककर्णांश्च चलल्लम्बपयोधरान् ।
करालान्भुग्नवक्त्रांश्च विकटान्वामनांस्तथा ॥

धन्विनः खड्गिनश्चैव शतघ्नीमुसलायुधान् ।
परिघोत्तमहस्तांश्च विचित्रकवचोज्ज्वलान् ॥१८॥

नातिस्थूलान्नातिकृशान्नातिदीर्घातिह्रस्वकान् ।
नातिगौरान्नातिकृष्णान्नातिकुब्जान्न वामनान् ॥

विरूपान्बहुरूपांश्च सुरूपांश्च सुवर्चसः ।
ध्वजिनः पताकिनश्चैव ददर्श विविधायुधान् ॥

शक्तिवृक्षायुधांश्चैव पट्टिसाशनिधारिणः ।
क्षेपणीपाशहस्तांश्च ददर्श स महाकपिः ॥२१॥

स्रग्विणः स्वनुलिप्तांश्च वराभरणभूषितान्।
नानावेषसमायुक्तान्यथास्वैरगतान्बहून्॥

तीक्ष्णशूलधरांश्चैव वज्रिणश्च महाबलान्।
शतसाहस्रमव्यग्रमारक्षं मध्यम कपिः॥ २३॥

रक्षोऽधिपतिनिर्दिष्टं ददर्शान्तःपुराग्रतः।
स तदा तद्गृहं दृष्ट्वा महाहाटकतोरणम्॥ २४॥

राक्षसेन्द्रस्य विख्यातमद्रिमूर्ध्नि प्रतिष्ठितम्।
पुण्डरीकावतंसाभिः परिखाभिः समावृतम्॥

प्राकारावृतमत्यन्तं ददर्श स महाकपिः।
त्रिविष्टपनिभं दिव्यं दिव्यनादविनादितम्॥

वाजिहेषितसंघुष्टं नादितं भूषणैस्तथा।
रथैर्यानैर्विमानैश्च तथा गजहयैः शुभैः॥२७॥

वारणैश्च चतुर्दन्तैः श्वेताभ्रनिचयोपमैः।
भूषितं रुचिरद्वारं मत्तैश्च मृगपक्षिभिः॥ २८॥

रक्षितं सुमहावीर्यैर्यातुधानैः सहस्रशः।
राक्षसाधिपतेर्गुप्तमाविवेश गृहं कपिः॥ २९॥

सहेमजाम्बूनदचक्रवालं
महार्हमुक्तामणिभूषितान्तम् ।
परार्ध्यकालागुरुचन्दनाक्तं
स रावणान्तःपुरमाविवेश ॥ ३० ॥

इति चतुर्थः सर्गः ॥

---

पञ्चमः सर्गः ॥

---

ततः स मध्यं गतमंशुमन्तं
ज्योत्स्नावितानं महदुद्वमन्तम् ।
ददर्श धीमान्दिवि भानुमन्तं
गोष्ठे वृषं मत्तमिव भ्रमन्तम् ॥ १ ॥

लोकस्य पापानि विनाशयन्तं
महोदधिं चापि समेधयन्तम् ।
भूतानि सर्वाणि विराजयन्तं
ददर्श शीतांशुमथाभियान्तम् ॥ २ ॥

या भाति लक्ष्मीर्भुवि मन्दरस्था
तथा प्रदोषेषु च सागरस्था ।
तथैव तोयेषु च पुष्करस्था
रराज सा चारुनिशाकरस्था ॥ ३ ॥

हंसो यथा राजतपञ्जरस्थः
सिंहो यथा मन्दरकन्दरस्थः ।
वीरो यथा गर्वितकुञ्जरस्थ-
श्चन्द्रोऽपि बभ्राज तथाम्बरस्थः ॥ ४ ॥

स्थितः ककुद्मानिव तीक्ष्णशृङ्गो
महाचलः श्वेत इवोच्चशृङ्गः ।
हस्तीव जाम्बूनदबद्धशृङ्गो
विभाति चन्द्रः परिपूर्णशृङ्गः ॥ ५ ॥

विनष्टशीताम्बुतुषारपङ्को
महाग्रहग्राहविनष्टपङ्कः ।
प्रकाशलक्ष्म्याश्रयनिर्मलाङ्गो
रराज चन्द्रो भगवाञ्छशाङ्कः ॥ ६ ॥

शिलातलं प्राप्य यथा मृगेन्द्रो
महारणं प्राप्य यथा गजेन्द्रः ।
राज्यं समासाद्य यथा नरेन्द्र-
स्तथा प्रकाशो विरराज चन्द्रः ॥ ७ ॥

प्रकाशचन्द्रोदयनष्टदोषः
प्रवृद्धरक्षःपिशिताशदोषः ।
रामाभिरामेरितचित्तदोषः
स्वर्गप्रकाशो भगवान्प्रदोषः ॥ ८ ॥

तन्त्रीस्वनाः कर्णसुखाः प्रवृत्ताः
स्वपन्ति नार्यः पतिभिः सुवृत्ताः ।
नक्तंचराश्चापि तथा प्रवृत्ता
विहर्तुमत्यद्भुतरौद्रवृत्ताः ॥ ९ ॥

मत्तप्रमत्तानि समाकुलानि
रथाश्वभद्रासनसंकुलानि ।
वीरश्रिया चापि समाकुलानि
ददर्श धीमान्स कपिः कुलानि ॥ १० ॥

परस्परं पार्श्वकमाक्षिपन्ति
    भुजांश्च पीनानथ विक्षिपन्ति ।
मधुप्रलापानपि विक्षिपन्ति
    मत्तानि चान्योन्यमधिक्षिपन्ति ॥ ११ ॥

रसांसि वक्षांसि च विक्षिपन्ति
    गात्राणि कान्तासु च विक्षिपन्ति ।
रूपाणि चित्राणि च विक्षिपन्ति
    दृढानि चापानि च विक्षिपन्ति ॥ १२ ॥

ददर्श कान्ताश्च समालपन्त्य-
    स्तथापरास्तत्र पुनः स्वपन्त्यः ।
सुरूपवक्त्राश्च तथा हसन्त्यः
    क्रुद्धाः पराश्चापि विनिःश्वसन्त्यः ॥

महागजैश्चापि तथा नदद्भिः
    सुपूजितैश्चापि तथा सुमद्भिः ।
रराज वीरैश्च विनिःश्वसद्भि-
    र्हृदो भुजङ्गैरिव निःश्वसद्भिः ॥ १४ ॥

बुद्धिप्रधानान्रुचिराभिधाना-
न्संश्रद्दधानाञ्जगतः प्रधानान् ।
नानाविधानान्रुचिराभिधाना
न्ददर्श तस्यां पुरि यातुधानान् ॥१५॥

ननन्द दृष्ट्वा च स तान्सुरूपा-
न्नानागुणानात्मगुणानुरूपान् ।
विद्योतमानान्स तदानुरूपा-
न्ददर्श कांश्चिच्च पुनर्विरूपान् ॥ १६ ॥

ततो वरार्हाः सुविशुद्धभावा-
स्तेषां स्त्रियस्तत्र महानुभावाः
प्रियेषु पानेषु च सक्तभावा
ददर्श तारा इव सुप्रभावाः ॥ १७ ॥

श्रिया ज्वलन्तीस्त्रपयोपगूढा
निशीथकाले रमणोपगूढाः ।
ददर्श काश्चित्प्रमदोपगूढा
यथा विहङ्गाः कुसुमोपगूढाः ॥ १८ ॥

अन्याः पुनर्हर्म्यतलोपविष्टा
स्तत्र प्रियाङ्केषु सुखोपविष्टाः ।
भर्तुः प्रिया धर्मपरा निविष्टा
ददर्श धीमान्मदनाभिविष्टाः ॥ १९ ॥

अप्रावृताः काञ्चनराजिवर्णाः
काश्चित्परार्ध्यास्तपनीयवर्णाः ।
पुनश्च काश्चिच्छशलक्ष्मवर्णाः
कान्तप्रहीणा रुचिराङ्गवर्णाः ॥ २० ॥

ततः प्रियान्प्राप्य मनोभिरामा-
न्सुप्रीतियुक्ताः सुमनोभिरामाः ।
गृहेषु हृष्टाः परमाभिरामा
हरिप्रवीरः स ददर्श रामाः ॥ २१ ॥

चन्द्रप्रकाशाश्च हि वक्त्रमाला
वक्राक्षिपक्ष्माश्च सुनेत्रमालाः ।
विभूषणानां च ददर्श मालाः
शतह्रदानामिव चारुमालाः ॥ २२ ॥

न स्वेव सीतां परमाभिजातां
पथि स्थिते राजकुले प्रजाताम् ।
लतां प्रफुल्लामिव साधु जातां
ददर्श तन्वीं मनसाभिजाताम् ॥ २३ ॥

सनातने वर्त्मनि संनिविष्टां
रामेक्षणीं तां मदनाभिविष्टाम् ।
भर्तुर्मनः श्रीमदनुप्रविष्टां
स्त्रीभ्यो वराभ्यश्च सदा विशिष्टाम् ॥

उष्मार्दितां सानुसृतास्रकण्ठीं
पुरा वरार्होत्तमनिष्ककण्ठीम् ।
सुजातपक्ष्मामभिरक्तकण्ठीं
वने प्रनृत्तामिव नीलकण्ठीम् ॥ २५ ॥

अव्यक्तरेखामिव चन्द्ररेखां
पांसुप्रदिग्धामिव हेमरेखाम् ।
क्षतप्ररूढामिव बाणरेखां
वायुप्रभिन्नामिव मेघरेखाम् ॥ २६ ॥

सीतामपश्यन्मनुजेश्वरस्य
रामस्य पत्नीं वदतां वरस्य ।
बभूव दुःखाभिहतश्चिरस्य
प्लवंगमो मन्द इवाचिरस्य ॥ २७ ॥

इति पञ्चमः सर्गः ॥

—•—

## षष्ठः सर्गः ॥

—•—

स निकामं विमानेषु विषण्णः कामरूपधृत् ।
विचचार कपिर्लङ्कां लाघवेन समन्वितः ॥ १ ॥

आससादाथ लक्ष्मीवान्राक्षसेन्द्रनिवेशनम् ।
प्राकारेणार्कवर्णेन भास्वरेणाभिसंवृतम् ॥ २ ॥

रक्षितं राक्षसैर्भीमैः सिंहैरिव महद्वनम् ।
समीक्षमाणो भवनं चकाशे कपिकुञ्जरः ॥ ३ ॥

रूप्यकोपहितैश्चित्रैस्तोरणैर्हेमभूषितैः ।
विचित्राभिश्च कक्ष्याभिर्द्वारैश्च रुचिरैर्वृतम् ॥ ४ ॥

गजास्थितैर्महामात्रैः शूरैश्च विगतश्रमैः ।
उपस्थितमसंहार्यैर्हयैः स्यन्दनयायिभिः ॥ ५

सिंहव्याघ्रतनुत्राणैर्दान्तकाञ्चनराजतैः ।
घोषवद्भिर्विचित्रैश्च सदा विचरितं रथैः ॥ ६

बहुरत्नसमाकीर्णं परार्ध्यासनभाजनम् ।
महारथसमावासं महारथमहासनम् ॥ ७ ॥

दृश्यैश्च परमोदारैस्तैस्तैश्च मृगपक्षिभिः ।
विविधैर्बहुसाहस्रैः परिपूर्णं समन्ततः ॥ ८ ॥

विनीतैरन्तपालैश्च रक्षोभिश्च सुरक्षितम् ।
मुख्याभिश्च वरस्त्रीभिः परिपूर्णं समन्ततः ॥

मुदितप्रमदारत्नं राक्षसेन्द्रनिवेशनम् ।
वराभरणसंह्रादैः समुद्रस्वननिःस्वनम् ॥ १० ॥

तद्राजगुणसंपन्नं मुख्यैश्च वरचन्दनैः ।
महाजनैः समाकीर्णं सिंहैरिव महद्वनम् ॥११॥

भेरीमृदङ्गाभिरुतं शङ्खघोषविनादितम् ।
नित्यार्चितं पर्वहुतं पूजितं राक्षसैः सदा ॥

समुद्रमिव गम्भीरं समुद्रमिव निःस्वनम् ।
महात्मनो महद्वेश्म महारत्नपरिच्छदम् ॥ १३ ॥

महारत्नसमाकीर्णं ददर्श स महाकपिः ।
विराजमानं वपुषा गजाश्वरथसंकुलम् ॥ १४ ॥

लङ्काभरणमित्येव सोऽमन्यत महाकपिः ।
चचार हनुमांस्तत्र रावणस्य समीपतः ॥१५॥

गृहाद्गृहं राक्षसानामुद्यानानि च वानरः ।
वीक्षमाणो ह्यसन्त्रस्तः प्रासादांश्च चचार सः ॥

अवप्लुत्य महावेगः प्रहस्तस्य निवेशनम् ।
ततोऽन्यत्पुप्लुवे वेश्म महापार्श्वस्य वीर्यवान् ॥

अथ मेघप्रतीकाशं कुम्भकर्णनिवेशनम् ।
विभीषणस्य च तथा पुप्लुवे स महाकपिः ॥

महोदरस्य च गृहं विरूपाक्षस्य चैव हि ।
विद्युज्जिह्वस्य भवनं विद्युन्मालेस्तथैव च ॥

वज्रदंष्ट्रस्य च तथा पुप्लुवे स महाकपिः ।
शुकस्य च महावेगः सारणस्य च धीमतः ॥

तथा चेन्द्रजितो वेश्म जगाम हरियूथपः ।
जम्बुमालेः सुमालेश्च जगाम भवनं ततः ॥

रश्मिकेतोश्च भवनं सूर्यशत्रोस्तथैव च ।
वज्रकायस्य च तथा पुप्लुवे स महाकपिः ॥

धूम्राक्षस्याथ सम्पातेर्भवनं मारुतात्मजः ।
विद्युद्रूपस्य भीमस्य घनस्य विघनस्य च ॥

शुकनासस्य वक्रस्य शठस्य विकटस्य च ।
ह्रस्वकर्णस्य दंष्ट्रस्य रोमशस्य च रक्षसः ॥

युद्धोन्मत्तस्य मत्तस्य ध्वजग्रीवस्य रक्षसः ।
विद्युज्जिह्वेन्द्रजिह्वानां तथा हस्तिमुखस्य च ॥

करालस्य पिशाचस्य शोणिताक्षस्य चैव हि ।
क्रममाणः क्रमेणैव हनूमान्मारुतात्मजः ॥ २६

तेषु तेषु महार्हेषु भवनेषु महायशाः ।
तेषामृद्धिमतामृद्धिं ददर्श स महाकपिः ॥ २७

सर्वेषां समतिक्रम्य भवनानि महायशाः ।
आससादाथ लक्ष्मीवान्राक्षसेन्द्रनिवेशनम् ॥

रावणस्योपशायिन्यो ददर्श हरिसत्तमः ।
विचरन्हरिशार्दूलो राक्षसीर्विकृतेक्षणाः ॥२९॥

शूलमुद्गरहस्ताश्च शक्तितोमरधारिणीः ।
ददर्श विविधान्गुल्मांस्तस्य रक्षःपतेर्गृहे ॥३०॥

राक्षसांश्च महाकायान्नानाप्रहरणोद्यतान् ।
रक्ताञ्श्वेतान्सितांश्चापि हरितांश्च महाजवान् ॥

कुलीनान्रूपसम्पन्नान्गजान्परगजारुजान् ।
निष्ठितान्गजशिक्षायामैरावतसमान्युधि ॥३२॥

निहन्तॄन्परसैन्यानां गृहे तस्मिन्ददर्श सः ।
क्षरतश्च यथा मेघान्स्रवतश्च यथा गिरीन् ॥

मेघस्तनितनिर्घोषान्दुर्धर्षान्समरे परैः ।
सहस्रं वाजिनां तत्र जाम्बूनदपरिष्कृतम् ॥

ददर्श राक्षसेन्द्रस्य रावणस्य निवेशने ।
शिबिका विविधाकाराः स कपिर्मारुतात्मजः ॥

हेमजालपरिच्छन्नास्तरुणादित्यवर्चसः ।
लतागृहाणि चित्राणि चित्रशालागृहाणि च ॥

क्रीडागृहाणि चान्यानि दारुपर्वतकानपि ।
कामस्य गृहकं रम्यं दिवागृहकमेव च ॥ ३७
ददर्श राक्षसेन्द्रस्य रावणस्य निवेशने ।
स मन्दरगिरिप्रख्यं मयूरस्थानसंकुलम् ॥
ध्वजयष्टिभिराकीर्णं ददर्श भवनोत्तमम् ।
अनन्तरत्नसंकीर्णं निधिजालसमावृतम् ॥ ३९
धीरानिष्ठितकर्मान्तं गृहं भूतपतेरिव ।
अर्चिर्भिश्चापि रत्नानां तेजसा रावणस्य च ।
विरराजाथ तद्वेश्म रश्मिमानिव रश्मिभिः ।
जाम्बूनदमयान्येव शयनान्यासनानि च ॥
भाजनानि च शुभ्राणि ददर्श हरियूथपः ।
मध्वासवकृतक्लेदं मणिभाजनसंकुलम् ॥ ४२
मनोरममसंबाधं कुबेरभवनं यथा ।
नूपुराणां च घोषेण काञ्चीनां निनदेन च ॥
मृदङ्गतलघोषैश्च घोषवद्भिर्विनादितम् ।
प्रासादसंघातयुतं स्त्रीरत्नशतसंकुलम् ।
सुव्यूढकक्ष्यं हनुमान्प्रविवेश महागृहम् ॥ ४४
इति षष्ठः सर्गः ॥

## सप्तमः सर्गः ॥

स वेश्मजालं बलवान्ददर्श
व्यासक्तवैडूर्यसुवर्णजालम् ।
यथा महत्प्रावृषि मेघजालं
विद्युत्पिनद्धं सविहङ्गजालम् ॥ १ ॥

निवेशनानां विविधाश्च शालाः
प्रधानशङ्खायुधचापशालाः ।
मनोहराश्चापि पुनर्विशाला
ददर्श वेश्माद्रिषु चन्द्रशालाः ॥ २ ॥

गृहाणि नानावसुराजितानि
देवासुरैश्चापि सुपूजितानि ।
सर्वैश्च दोषैः परिवर्जितानि
कपिर्ददर्श स्वबलार्जितानि ॥ ३ ॥

तानि प्रयत्नाभिसमाहितानि
मयेन साक्षादिव निर्मितानि ।

महीतले सर्वगुणोत्तराणि
ददर्श लङ्काधिपतेर्गृहाणि ॥ ४ ॥

ततो ददर्शोच्छ्रितमेघरूपं
मनोहरं काञ्चनचारुरूपम् ।
रक्षोधिपस्यात्मबलानुरूपं
गृहोत्तमं ह्यप्रतिरूपरूपम् ॥ ५ ॥

महीतले स्वर्गमिव प्रकीर्णं
श्रिया ज्वलन्तं बहुरत्नकीर्णम् ।
नानातरूणां कुसुमावकीर्णं
गिरेरिवाग्रं रजसावकीर्णम् ॥ ६ ॥

नारीप्रवेकैरिव दीप्यमानं
तडिद्भिरम्भोदवदर्च्यमानम् ।
हंसप्रवेकैरिव वाह्यमानं
श्रिया युतं खे सुकृतां विमानम् ॥ ७

यथा नगाग्रं बहुधातुचित्रं
यथा नभश्च ग्रहचन्द्रचित्रम् ।

दद‌र्श युक्तीकृतमेघचित्रं
   विमानरत्नं बहुरत्नचित्रम् ॥ ८ ॥

मही कृता पर्वतराजिपूर्णा
   शैलाः कृता वृक्षवितानपूर्णाः ।
वृक्षाः कृताः पुष्पवितानपूर्णाः
   पुष्पं कृतं केसरपत्रपूर्णम् ॥ ९ ॥

कृतानि वेश्मानि च पाण्डुराणि
   तथा सुपुष्पाण्यपि पुष्कराणि ।
पुनश्च पद्मानि सकेसराणि
   धन्यानि चित्राणि तथा वनानि ॥

पुष्पाह्वयं नाम विराजमानं
   रत्नप्रभाभिश्च विवर्धमानम् ।
वेश्मोत्तमानामपि शोभमानं
   महाकपिस्तत्र महाविमानम् ॥ ११ ॥

कृताश्च वैडूर्यमया विहंगा
   रूप्यमयाश्चैव तथा विहंगाः ।

चित्राश्च नानावसुभिर्भुजङ्गा
जात्यानुरूपास्तुरगाः शुभाङ्गाः ॥ १२

प्रवालजाम्बूनदपुष्पपक्षाः
सलीलमावर्जितजिह्मपक्षाः ।
कामस्य साक्षादिव भान्ति पक्षाः
कृता विहगाः सुमुखाः सुपक्षाः ॥ १३

नियुज्यमानास्तु गजाः सुहस्ताः
सकेसराश्चोत्पलपत्रहस्ताः ।
बभूव देवी च कृता सुहस्ता
लक्ष्मीस्तथा पद्मिनि पद्महस्ता ॥ १४

इतीव तद्गृहमभिगम्य शोभनं
सविस्मयो नगमिव चारुशोभनम् ।
पुनश्च तत्परमसुगन्धि सुन्दरं
हिमात्यये नगमिव चारुकन्दरम् ॥ १५

ततः स तां कपिरभिपत्य पूजितां
चरन्पुरीं दशमुखबाहुपालिताम् ।

अदृश्य तां जनकसुतां सुपूजितां
सुदुःखितः पतिगुणवेगनिर्जिताम् ॥

ततस्तदा बहुविधभावितात्मनः
कृतात्मनो जनकसुतां सुवर्त्मनः ।
अपश्यतोऽभवदतिदुःखितं मनः
सुचक्षुषः प्रविचरतो महात्मनः ॥१७॥

इति सप्तमः सर्गः ॥

## अष्टमः सर्गः ॥

—•—

स तस्य मध्ये भवनस्य संस्थितं
महद्विमानं बहुरत्नचित्रितम् ।
प्रतप्तजाम्बूनदजालकृत्रिमं
ददर्श वीरः पवनात्मजः कपिः ॥ १ ॥

तदप्रमेयाप्रतिकारकृत्रिमं
कृतं स्वयं साध्विति विश्वकर्मणा ।
दिवं गतं वायुपथे प्रतिष्ठितं
व्यराजतादित्यपथस्य लक्ष्मवत् ॥ २ ॥

न तत्र किंचिन्न कृतं प्रयत्नतो
   न तत्र किंचिन्न महार्हरत्नवत् ।
न ते विशेषा नियताः सुरेष्वपि
   न तत्र किंचिन्न महाविशेषवत् ॥ ३

तपःसमाधानपराक्रमार्जितं
   मनःसमाधानविचारचारिणम् ।
अनेकसंस्थानविशेषनिर्मितं
   ततस्ततस्तुल्यविशेषदर्शनम् ॥ ४ ॥

मनः समाधाय तु शीघ्रगामिनं
   दुरावरं मारुततुल्यगामिनम् ।
महात्मनां पुण्यकृतां मनस्विनां
   यशस्विनामग्र्यमुदामिवालयम् ॥ ५

विशेषमालम्ब्य विशेषसंस्थितं
   विचित्रकूटं बहुकूटमण्डितम् ।
मनोभिरामं शरदिन्दुनिर्मलं
   विचित्रकूटं शिखरं गिरेर्यथा ॥ ६ ॥

वहन्ति यं कुण्डलशोभितानना
महाशना व्योमचरा निशाचराः ।
निवृत्तविध्वस्तविशाललोचना
महाजवा भूतगणाः सहस्रशः ॥ ७ ॥

वसन्तपुष्पोत्करचारुदर्शनं
वसन्तमासादपि कान्तदर्शनम् ।
स पुष्पकं तत्र विमानमुत्तमं
ददर्श तद्वानरवीरसत्तमः ॥ ८ ॥

इति अष्टमः सर्गः ॥

—•—

## नवमः सर्गः ॥

—•—

तस्यालयवरिष्ठस्य मध्ये विपुलमायतम् ।
ददर्श भवनश्रेष्ठं हनुमान्मारुतात्मजः ॥ १ ॥

अर्धयोजनविस्तीर्णमायतं योजनं हि तत् ।
भवनं राक्षसेन्द्रस्य बहुप्रासादसंकुलम् ॥ २ ॥

मार्गमाणस्तु वैदेहीं सीतामायतलोचनाम् ।
सर्वतः परिचक्राम हनुमानरिसूदनः ॥ ३ ॥

उत्तमं राक्षसावासं हनुमानवलोकयन् ।
आससादाथ लक्ष्मीवान्राक्षसेन्द्रनिवेशनम् ॥

चतुर्विषाणैर्द्विरदैस्त्रिविषाणैस्तथैव च ।
परिक्षिप्तमसंबाधं रक्ष्यमाणमुदायुधैः ॥ ५ ॥

राक्षसीभिश्च पत्नीभी रावणस्य निवेशनम् ।
आहृताभिश्च विक्रम्य राजकन्याभिरावृतम् ॥

तन्नक्रमकराकीर्णं तिमिंगिलझषाकुलम् ।
वायुवेगसमाधूतं पन्नगैरिव सागरम् ॥ ७ ॥

या हि वैश्रवणे लक्ष्मीर्या चेन्द्रे हरिवाहने ।
सा रावणगृहे सर्वा नित्यमेवानपायिनी ॥ ८ ॥

या च राज्ञः कुबेरस्य यमस्य वरुणस्य च ।
तादृशी तद्विशिष्टा वा ऋद्धी रक्षोगृहेष्विह ।

तस्य हर्म्यस्य मध्यस्थं वेश्म चान्यत्सुनिर्मितम् ।
बहुनिर्यूहसंकीर्णं ददर्श पवनात्मजः ॥ १० ॥

ब्रह्मणोऽर्थे कृतं दिव्यं दिवि यद्विश्वकर्मणा ।
विमानं पुष्पकं नाम सर्वरत्नविभूषितम् ॥११॥

परेण तपसा लेभे यत्कुबेरः पितामहात् ।
कुबेरमोजसा जित्वा लेभे तद्राक्षसेश्वरः ॥१२॥

ईहामृगसमायुक्तैः कार्तस्वरहिरण्मयैः ।
सुकृतैराचितं स्तम्भैः प्रदीप्तमिव च श्रिया ॥

मेरुमन्दरसंकाशैरालिखद्भिरिवाम्बरम् ।
कूटागारैः शुभाकारैः सर्वतः समलंकृतम् ॥

ज्वलनार्कप्रतीकाशं सुकृतं विश्वकर्मणा ।
हेमसोपानसंयुक्तं चारुप्रवरवेदिकम् ॥ १५ ॥

जालवातायनैर्युक्तं काञ्चनैः स्फाटिकैरपि ।
इन्द्रनीलमहानीलमणिप्रवरवेदिकम् ॥ १६ ॥

विद्रुमेण विचित्रेण मणिभिश्च महाधनैः ।
निस्तुलाभिश्च मुक्ताभिस्तलेनाभिविराजितम् ॥

चन्दनेन च रक्तेन तपनीयनिभेन च ।
सुपुण्यगन्धिना युक्तमादित्यतरुणोपमम् ॥१८॥

कूटागारैर्वराकारैर्विविधैः समलंकृतम् ।
विमानं पुष्पकं दिव्यमारुरोह महाकपिः ॥१९॥

तत्रस्थः स तदा गन्धं पानभक्ष्यान्नसंभवम् ।
दिव्यं संमूर्छितं जिघ्रन्रूपवन्तमिवानिलम् ॥

स गन्धस्तं महासत्त्वं बन्धुर्बन्धुमिवोत्तमम् ।
इत एहीत्युवाचेव तत्र यत्र स रावणः ॥२१॥

ततस्तां प्रस्थितः शालां ददर्श महतीं शुभाम् ।
रावणस्य मनःकान्तां कान्तामिव वरस्त्रियम् ॥

मणिसोपानविकृतां हेमजालविराजिताम् ।
स्फाटिकैरावृततलां दन्तान्तरितरूपिकाम् ॥

मुक्ताभिश्च प्रवालैश्च रूप्यचामीकरैरपि ।
विभूषितां मणिस्तम्भैः सुबहुस्तम्भभूषिताम् ॥

समैर्ऋजुभिरत्युच्चैः समन्तात्सुविभूषितैः ।
स्तम्भैः पक्षैरिवात्युच्चैर्दिवं संप्रस्थितामिव ॥

महत्या कुथयास्तीर्णां पृथिवीलक्षणाङ्कया ।
पृथिवीमिव विस्तीर्णां सराष्ट्रगृहमालिनीम् ॥

नादितां मत्तविहगैर्दिव्यगन्धाधिवासिताम् ।
परार्ध्यास्तरणोपेतां रक्षोधिपनिषेविताम् ॥

धूम्रामगुरुधूपेन विमलां हंसपाण्डुराम् ।
चित्रां पुष्पोपहारेण कल्माषीमिव सुप्रभाम् ॥

मनःसंह्लादजननीं वर्णस्यापि प्रसादिनीम् ।
तां शोकनाशिनीं दिव्यां श्रियः संजननीमिव ॥

इन्द्रियाणीन्द्रियार्थैश्च पञ्च पञ्चभिरुत्तमैः ।
तर्पयामास मातेव तदा रावणपालिता ॥ ३० ॥

स्वर्गोऽयं देवलोकोऽयमिन्द्रस्येयं पुरी भवेत् ।
सिद्धिर्वेयं परा हि स्यादित्यमन्यत मारुतिः ॥

प्रध्यायत इवापश्यत्प्रदीपांस्तत्र काञ्चनान् ।
धूर्तानिव महाधूर्तैर्देवनेन पराजितान् ॥ ३२ ॥

दीपानां च प्रकाशेन तेजसा रावणस्य च ।
अर्चिर्भिर्भूषणानां च प्रदीप्तेत्यभ्यमन्यत ॥ ३३ ॥

ततोऽपश्यत्कुथासीनं नानावर्णाम्बरस्रजम् ।
सहस्रं वरनारीणां नानावेषविभूषितम् ॥ ३४ ॥

परिवृत्तेऽर्धरात्रे तु पाननिद्रावशंगतम्।
क्रीडित्वोपरतं रात्रौ सुष्वाप बलवत्तदा ॥२५॥

तत्प्रसुप्तं विरुरुचे नि:शब्दान्तरभूषणम्।
निःशब्दहंसभ्रमरं यथा पद्मवनं महत् ॥ २६ ॥

तासां संवृतदन्तानि मीलिताक्षाणि मारुतिः।
अपश्यत्पद्मगन्धीनि वदनानि सुयोषिताम् ॥

प्रबुद्धानीव पद्मानि तासां भूत्वा क्षपाक्षये।
पुनः संवृतपत्राणि रात्राविव बभुस्तदा ॥२८॥

इमानि मुखपद्मानि नियतं मत्तषट्पदाः।
अम्बुजानीव फुल्लानि प्रार्थयन्ति पुनः पुनः॥

इति चामन्यत श्रीमानुपपत्त्या महाकपिः
मेने हि गुणतस्तानि समानि सलिलोद्भवैः ॥

सा तस्य शुशुभे शाला ताभिः स्त्रीभिर्विराजिता।
शारदीव प्रसन्ना द्यौस्ताराभिरभिशोभिता ॥

स च ताभिः परिवृतः शुशुभे राक्षसाधिपः।
यथा ह्युडुपतिः श्रीमांस्ताराभिरभिसंवृतः ॥

याश्च्यवन्तेऽम्बराचाराः पुण्यशेषसमावृताः ।
इमास्ताः संगताः कृत्स्ना इति मेने हरिस्तदा ॥

ताराणामिव सुव्यक्तं महतीनां शुभार्चिषाम् ।
प्रभा वर्णप्रसादाश्च विरेजुस्तत्र योषिताम् ॥

व्यावृत्तगुरुपीनस्तनप्रकीर्णवरभूषणाः ।
पानव्यायामकालेषु निद्रापहृतचेतसः ॥ ४५ ॥

व्यावृत्ततिलकाः काश्चित्काश्चिदुत्क्रान्तनूपुराः ।
पार्श्वे गलितहाराश्च काश्चित्परमयोषितः ॥

मुक्ताहारावृताश्चान्याः काश्चिद्विस्रस्तवाससः ।
व्याविद्धरशनादाम्ना किशोर्य इव वाहिताः ॥

सुकुण्डलधराश्चान्या विच्छिन्नमृदितस्रजः ।
गजेन्द्रमृदिताः फुल्ला लता इव महावने ॥ ४८ ॥

चन्द्रांशुकिरणाभाश्च हारा कासांचिदुत्कटाः ।
हंसा इव बहुः सुप्ताः स्तनमध्येषु योषिताम् ॥

अपरासां च वैदूर्याः कादम्बा इव पक्षिणः
हेमसूत्राणि चान्यासां चक्रवाका इवाभवन् ॥

हंसकारण्डवाकीर्णाश्चक्रवाकोपशोभिताः ।
आपगा इव ता रेजुर्जघनैः पुलिनैरिव ॥५१॥

किंकिणीजालसंकोशास्ता वक्त्रविपुलाम्बुजाः ।
भावग्राहा यशस्तीराः सुप्ता नद्य इवाबभुः ॥

मृदुष्वङ्गेषु कासांचित्कुचाग्रेषु च संस्थिताः ।
बभूवुर्भ्रमराणीव शुभा भूषणराजयः ॥ ५३ ॥

अंशुकान्ताश्च कासांचिन्मुखमारुतकम्पिताः ।
उपर्युपरि वक्त्राणां व्याधूयन्ते पुनः पुनः ॥

ताः पताका इवोद्धूताः पत्नीनां रुचिरप्रभाः ।
नानावर्णाः सुवर्णानां वक्त्रमूलेषु रेजिरे ॥

ववल्गुश्चात्र कासांचित्कुण्डलानि शुभार्चिषाम् ।
मुखमारुतसंपर्कान्मन्दं मन्दं च योषिताम् ॥

शर्करासवगन्धैश्च प्रकृत्या सुरभिः सुखः ।
तासां वदननिःश्वासः सिषेवे रावणं तदा ॥

रावणाननशङ्काश्च काश्चिद्रावणयोषितः ।
मुखानि स्म सपत्नीनामुपाजिघ्रन्पुनः पुनः ॥

अत्यर्थं सक्तमनसो रावणे ता वरस्त्रियः ।
अस्वतन्त्राः सपत्नीनां प्रियमेवाचरंस्तदा ॥

बाहूनुपनिधायान्याः पारिहार्यविभूषितान् ।
अंशुकानि च रम्याणि प्रमदास्तत्र शिश्यिरे ॥

अन्या वक्षसि चान्यस्यास्तस्याः काश्चित्पुनर्भुजम् ।
अपरा त्वङ्कमन्यस्यास्तस्याश्चाप्यपरा भुजौ ॥

ऊरुपार्श्वकटीपृष्ठमन्योन्यस्य समाश्रिताः ।
परस्परनिविष्टाङ्ग्यो मदस्नेहवशानुगाः ॥६२॥

अन्योन्यस्याङ्गसंस्पर्शात्प्रीयमाणाः सुमध्यमाः ।
एकीकृतभुजाः सर्वाः सुषुपुस्तत्र योषितः ॥

अन्योन्यभुजसूत्रेण स्त्रीमाला ग्रथिता हि सा ।
मालेव ग्रथिता सूत्रे शुशुभे मत्तषट्पदा ॥६४॥

लतानां माधवे मासि फुल्लानां वायुसेवनात् ।
अन्योन्यमालाग्रथितं संसक्तकुसुमोच्चयम् ॥

व्यतिवेष्टितसुस्कन्धमन्योन्यभ्रमराकुलम् ।
आसीद्वनमिवोद्धूतं स्त्रीवनं रावणस्य तत् ।

यच्चितेष्वपि सुव्यक्तं न तासां योषितां तदा ।
विवेकः शक्य आधातुं भूषणाङ्गाम्बरस्रजाम् ॥

रावणे सुखसंविष्टे ताः स्त्रियो विविधप्रभाः ।
ज्वलन्तः काञ्चना दीपाः प्रैक्षन्तानिमिषा इव ॥

राजर्षिपितृदैत्यानां गन्धर्वाणां च योषितः ।
रक्षसां चाभवन्कन्यास्तस्य कामवशं गताः ॥

युद्धकामेन ताः सर्वा रावणेन हृता स्त्रियः ।
समदा मदनेनैव मोहिताः काश्चिदागताः ॥

न तत्र काचित्प्रमदा प्रसह्य
वीर्योपपन्नेन गुणेन लब्धा ।
न चान्यकामापि न चान्यपूर्वा
विना वरार्हां जनकात्मजां ताम् ॥७१॥

न चाकुलीना न च हीनरूपा
नादक्षिणा नानुपचारयुक्ता ।
भार्याभवत्तस्य न हीनसत्त्वा
न चापि कान्तस्य नकामनीया ॥

बभूव बुद्धिस्तु हरीश्वरस्य
यदीदृशी राघवधर्मपत्नी ।
इमा यथा राक्षसराजभार्याः
सुजातमस्येति हि साधुबुद्धेः ॥ ७३ ॥

पुनश्च सोऽचिन्तयदार्तरूपो
ध्रुवं विशिष्टा गुणतो हि सीता ।
अथायमस्यां कृतवान्महात्मा
लङ्केश्वरः कष्टमनार्यकर्म ॥ ७४ ॥

इति नवमः सर्गः ॥



## दशमः सर्गः ॥



तत्र दिव्योपमं मुख्यं स्फाटिकं रत्नभूषितम् ।
अवेक्षमाणो हनुमान्ददर्श शयनासनम् ॥ १

दान्तकाञ्चनचित्राङ्गैर्वैदूर्यैश्च वरासनैः ।
महार्हास्तरणोपेतैरुपपन्नं महाधनैः ॥ २ ॥

तस्य चैकतमे देशे सोऽग्र्यमालाविभूषितम् ।
ददर्श पाण्डुरं छत्रं ताराधिपतिसंनिभम् ॥ ३ ॥

जातरूपपरिक्षिप्तं चित्रभानुसमप्रभम् ।
अशोकमालाविततं ददर्श परमासनम् ॥ ४ ॥

वालव्यजनहस्ताभिर्वीज्यमानं समन्ततः ।
गन्धैश्च विविधैर्जुष्टं वरधूपेन धूपितम् ॥ ५ ॥

परमास्तरणास्तीर्णमाविकाजिनसंवृतम् ।
दामभिर्वरमाल्यानां समन्तादुपशोभितम् ॥ ६ ॥

तस्मिञ्जीमूतसंकाशं प्रदीप्तोत्तमकुण्डलम् ।
लोहिताक्षं महाबाहुं महारजतवाससम् ॥ ७ ॥

लोहितेनानुलिप्ताङ्गं चन्दनेन सुगन्धिना ।
संध्यारक्तमिवाकाशे तोयदं सतडिद्गणम् ॥ ८ ॥

वृतमाभरणैर्दिव्यैः सुरूपं कामरूपिणम् ।
सवृक्षवनगुल्माढ्यं प्रसुप्तमिव मन्दरम् ॥ ९ ॥

क्रीडित्वोपरतं रात्रौ वराभरणभूषितम् ।
प्रियं राक्षसकन्यानां राक्षसानां सुखावहम् ॥

पीत्वाप्युपरतं चापि ददर्श स महाकपिः ।
भास्करे शयने वीर प्रसुप्तं राक्षसाधिपम् ॥११॥

निःश्वसन्तं यथा नागं रावणं वानरर्षभः ।
आसाद्य परमोद्विग्नः सोऽपासर्पत्सुभीतवत् ॥

अथारोहणमासाद्य वेदिकान्तरमाश्रितः ।
सुप्तं राक्षसशार्दूलं प्रेक्षते स्म महाकपिः ॥१३॥

शुशुभे राक्षसेन्द्रस्य स्वपतः शयनोत्तमम् ।
गन्धहस्तिनि संविष्टे यथा प्रस्रवणं महत् ॥

काञ्चनाङ्गदनद्धौ च ददर्श स महात्मनः ।
विक्षिप्तौ राक्षसेन्द्रस्य भुजाविन्द्रध्वजोपमौ ॥

ऐरावतविषाणाग्रैरापीडनकृतव्रणौ ।
वज्रोल्लिखितपीनांसौ विष्णुचक्रपरिक्षतौ ॥

पीनौ समसुजातांसौ संहतौ बलसंयुतौ ।
सुलक्षणनखाङ्गुष्ठौ स्वङ्गुलीतललक्षितौ ॥१७॥

संहतौ परिघाकारौ वृत्तौ करिकरोपमौ ।
विक्षिप्तौ शयने शुभ्रे पञ्चशीर्षाविवोरगौ ॥

अक्षतक्षतजकल्पेन सुशीतेन सुगन्धिना ।
चन्दनेन परार्ध्येन स्वनुलिप्तौ स्वलङ्कृतौ ॥

उत्तमस्त्रीविमृदितौ गन्धोत्तमनिषेवितौ ।
यक्षपन्नगगन्धर्वदेवदानवराविणौ ॥ २० ॥

ददर्श स कपिस्तस्य बाहू शयनसंस्थितौ
मन्दरस्यान्तरे सुप्तौ महाही रुषिताविव ॥

ताभ्यां स परिपूर्णाभ्यां भुजाभ्यां राक्षसेश्वरः ।
शुशुभेऽचलसंकाशः शृङ्गाभ्यामिव मन्दरः ॥

चूतपुंनागसुरभिर्वकुलोत्तमसंयुतः ।
मृष्टान्नरससंयुक्तः पानगन्धपुरःसरः ॥ २३ ॥

तस्य राक्षससिंहस्य निश्चक्राम महामुखात् ।
शयानस्य विनिःश्वासः पूरयन्निव तद्गृहम् ॥

मुक्तामणिविचित्रेण काञ्चनेन विराजितम् ।
मुकुटेनापवृत्तेन कुण्डलोज्ज्वलिताननम् ॥२५॥

रक्तचन्दनदिग्धेन तथा हारेण शोभिना
पीनायतविशालेन वक्षसाभिविराजितम् ।

पाण्डरेणापविद्धेन क्षौमेण क्षतजेक्षणम् ।
महार्हेण सुसंवीतं पीतेनोत्तमवाससा ॥ २७ ॥

माषराशिप्रतीकाशं निःश्वसन्तं भुजंगवत् ।
गाङ्गे महति तोयान्ते प्रसुप्तमिव कुञ्जरम् ॥

चतुर्भिः काञ्चनैर्दीपैर्दीप्यमानैश्चतुर्दिशम् ।
प्रकाशीकृतसर्वाङ्गं मेघं विद्युद्गणैरिव ॥ २९ ॥

पादमूलगताश्चापि ददर्श सुमहात्मनः ।
पत्नीः स प्रियभार्यस्य तस्य रक्षःपतेर्गृहे ॥

शशिप्रकाशवदनाश्चारुकुण्डलभूषिताः ।
अम्लानमाल्याभरणा ददर्श हरियूथपः ॥ ३१ ॥

नृत्तवादित्रकुशला राक्षसेन्द्रभुजाङ्कगाः ।
वराभरणधारिण्यो निषण्णा ददृशे हरिः ॥

वज्रवैडूर्यगर्भाणि श्रवणान्तेषु योषिताम् ।
ददर्श तापनीयानि कुण्डलान्यङ्गदानि च ॥

तासां चन्द्रोपमैर्वक्त्रैः शुभैर्ललितकुण्डलैः ।
विरराज विमानं तन्नभस्तारागणैरिव ॥ ३४ ॥

यद्रूपायामलिखास्ता राक्षसेन्द्रस्य योषितः ।
तेषु तेष्ववकाशेषु प्रसुप्तास्तनुमध्यमाः ॥ ३५ ॥

अङ्गहारैस्तथैवान्या कोमलैर्नृत्तशालिनी
विन्यस्तशुभसर्वाङ्गी प्रसुप्ता वरवर्णिनी ॥ ३६ ॥

काचिद्वीणां परिष्वज्य प्रसुप्ता संप्रकाशते ।
महानदीप्रकीर्णेव नलिनी पोतमाश्रिता ॥

अन्या कक्षगतेनैव मड्डुकेनासितेक्षणा ।
प्रसुप्ता भामिनी भाति बालपुत्रेव वत्सला ।

पटहं चारुसर्वाङ्गी पीड्य शेते शुभस्तनी ।
चिरस्य रमणं लब्ध्वा परिष्वज्येव भामिनी ॥

काचिद्वंशं परिष्वज्य सुप्ता कमललोचना ।
रहः प्रियतमं गृह्य सकामेव च कामिनी

विपञ्चीं परिगृह्यान्या नियता नृत्तशालिनी ।
निद्रावशमनुप्राप्ता सहकान्तेव भामिनी ॥

अन्या कनकसंकाशैर्मृदुपीनैर्मनोरमैः ।
मृदङ्गं परिपीड्याङ्गैः प्रसुप्ता मत्तलोचना ॥

भुजपार्श्वान्तरस्थेन कक्षगेन कृशोदरी ।
पणवेन सहानिन्द्या सुप्ता मदकृतश्रमा ॥ ४३॥

डिण्डिमं परिगृह्यान्या तथैवासक्तडिण्डिमा ।
प्रसुप्ता तरुणं वत्समुपगूह्येव भामिनी ॥ ४४॥

काचिदाडम्बरं नारी भुजसंयोगपीडितम् ।
कृत्वा कमलपत्राक्षी प्रसुप्ता मदमोहिता ॥

कलशीमपविध्यान्या प्रसुप्ता भाति भामिनी ।
वसन्ते पुष्पशबला मालेव परिमार्जिता ॥

पाणिभ्यां च कुचौ काचित्सुवर्णकलशोपमौ ।
उपगूह्याबला सुप्ता निद्राबलपराजिता ॥ ४७॥

अन्या कमलपत्राक्षी पूर्णेन्दुसदृशानना ।
अन्यामालिङ्ग्य सुश्रोणी प्रसुप्ता मदविह्वला ॥

आतोद्यानि विचित्राणि परिष्वज्यापराः स्त्रियः ।
निपीड्य च कुचैः सुप्ताः कामिन्यः कामुकानिव॥

तासामेकान्तविन्यस्ते शयानां शयने शुभे ।
ददर्श रूपसंपन्नामपरां स कपिः स्त्रियम् ॥

मुक्तामणिसमायुक्तैर्भूषणैः सुविभूषिताम् ।
विभूषयन्तीमिव तत्स्वश्रिया भवनोत्तमम् ॥

गौरीं कनकवर्णाङ्गीमिष्टामन्तःपुरेश्वरीम् ।
कपिर्मन्दोदरीं तत्र शयानां चारुरूपिणीम् ॥

स तां दृष्ट्वा महाबाहुर्भूषितां मारुतात्मजः ।
तर्कयामास सीतेति रूपयौवनसंपदा ।
हर्षेण महता युक्तो ननन्द हरियूथपः ॥ ५३ ॥

आस्फोटयामास चुचुम्ब पुच्छं
ननन्द चिक्रीड जगौ जगाम ।
स्तम्भानरोहन्निपपात भूमौ
निदर्शयन्स्वां प्रकृतिं कपीनाम् ॥५४॥

इति दशमः सर्गः ॥

—•—

एकादशः सर्गः ॥

—•—

अवधूय च तां बुद्धिं बभूवावस्थितस्तदा ।
जगाम चापरां चिन्तां सीतां प्रति महाकपिः ॥

न रामेण वियुक्ता सा स्वप्तुमर्हति भामिनी ।
न भोक्तुं नाप्यलंकर्तुं न पानमुपसेवितुम् ॥२॥

नान्यं नरमुपस्थातुं सुराणामपि चेश्वरम् ।
न हि रामसमः कश्चिद्विद्यते त्रिदशेष्वपि ॥३॥

अन्येयमिति निश्चित्य पानभूमौ चचार सः ।
क्रीडितेनापराः क्लान्ता गीतेन च तथापराः ॥

नृत्तेन चापराः क्लान्ताः पानविप्रहतास्तथा ।
मुरजेषु मृदङ्गेषु पीठिकासु च संस्थिताः ॥५॥

तथास्तरणमुख्येषु संविष्टाश्चापराः स्त्रियः ।
अङ्गनानां सहस्रेण भूषितेन विभूषणैः ॥ ६ ॥

रूपसंलापशीलेन युक्तगीतार्थभाषिणा ।
देशकालाभियुक्तेन युक्तवाक्याभिधायिना ॥

रताभिरतसंसुप्तं ददर्श हरियूथपः ।
तासां मध्ये महाबाहुः शुशुभे राक्षसेश्वरः ॥

गोष्ठे महति मुख्यानां गवां मध्ये यथा वृषः ।
स राक्षसेन्द्रः शुशुभे ताभिः परिवृतः स्वयम् ॥

करेणुभिर्यथारण्ये परिकीर्णो महाद्विपः।
सर्वकामैरुपेतां च पानभूमिं महात्मनः ।१०॥

ददर्श कपिशार्दूलस्तस्य रक्षःपतेर्गृहे ।
मृगाणां महिषाणां च वराहाणां च भागशः ॥

तत्र न्यस्तानि मांसानि पानभूमौ ददर्श सः ।
रौक्मेषु च विशालेषु भाजनेष्वर्धभक्षितान् ॥

ददर्श कपिशार्दूलो मयूरान्कुक्कुटांस्तथा ।
वराहवार्ध्राणसकान्दधिसौवर्चलायुतान् । १३ ॥

शल्यान्मृगमयूरांश्च हनुमानन्ववैक्षत ।
क्रकरान्विविधान्सिद्धांश्चकोरानर्धभक्षितान् ॥

महिषानेकशल्यांश्च छागांश्च कृतनिष्ठितान् ।
लेह्यानुच्चावचान्पेयान्भोज्यानि विविधानि च ॥

तथाम्ललवणोत्तंसैर्विविधै रागषाडवैः ।
हारनूपुरकेयूरैरपविद्धैर्महाधनैः ॥ १६ ॥

पानभाजनविक्षिप्तैः फलैश्च विविधैरपि ।
कृतपुष्पोपहारा भूरधिकं पुष्यति श्रियम् ॥

37737



तत्र तत्र च विन्यस्तैः सुश्लिष्टैः शयनासनैः ।
पानभूमिर्विना वह्निं प्रदीप्तेवोपलक्ष्यते ॥१८॥

बहुप्रकारैर्विविधैर्वरसंस्कारसंस्कृतैः ।
मांसैः कुशलसंयुक्तैः पानभूमिगतैः पृथक् ॥१९॥

दिव्याः प्रसन्ना विविधाः सुराः कृतसुरा अपि ।
शर्करासवमाध्वीकपुष्पासवफलासवाः ।२०॥

वासचूर्णैश्च विविधैर्मृष्टास्तैस्तैः पृथक्पृथक् ।
संतता शुशुभे भूमिर्माल्यैश्च बहुसंस्थितैः ॥

हिरण्मयैश्च विविधैर्भाजनैः स्फाटिकैरपि ।
जाम्बूनदमयैश्चान्यैः करकैरभिसंवृता ॥२२॥

राजतेषु च कुम्भेषु जाम्बूनदमयेषु च ।
पानश्रेष्ठं तथा भूरि कपिस्तत्र ददर्श सः ॥

सोऽपश्यच्छातकुम्भानि शीधोर्मणिमयानि च ।
राजतानि च पूर्णानि भाजनानि महाकपिः ॥

क्वचिदर्धावशेषाणि क्वचित्पीतानि सर्वशः ।
क्वचिन्नैव प्रपीतानि पानानि स ददर्श ह ॥

क्वचिद्भक्ष्यांश्च विविधान्क्वचित्पानानि भागशः।
क्वचिदर्धावशेषाणि पश्यन्वै विचचार ह॥

क्वचित्प्रभिन्नैः करकैः क्वचिदालोडितैर्घटैः।
क्वचित्संपृक्तमाल्यानि मूलानि च फलानि च॥

शयनान्यत्र नारीणां शुभ्राणि बहुधा पुनः।
परस्परं समाश्लिष्य काश्चित्सुप्ता वराङ्गनाः॥

काचिच्च वस्त्रमन्यस्याः स्वपन्त्याः परिधाय ताम्।
उपगम्याबला सुप्ता निद्राबलपराजिता॥ २९॥

तासामुच्छ्वासवातेन वस्त्रं माल्यं च गात्रजम्।
नात्यर्थं स्पन्दते चित्रं प्राप्य मन्दमिवानिलम्॥

चन्दनस्य च शीतस्य शीधोर्मधुरसस्य च।
विविधस्य च माल्यस्य धूपस्य विविधस्य च॥

बहुधा मारुतस्तत्र गन्धं विविधमुद्वहन्।
रसानां चन्दनानां च धूपानां चैव मूर्छितः॥

प्रववौ सुरभिर्गन्धो विमाने पुष्पके तदा।
श्यामावदातास्तत्रान्याः काश्चित्कृष्णा वराङ्गनाः

काचित्काञ्चनवर्णाङ्गी प्रमदा राक्षसालये ।
तासां निद्रावशस्थानां मदनेन च मूर्छितम् ॥

पद्मिनीनां प्रसुप्तानां रूपमासीद्यथैव हि ।
एवं सर्वमशेषेण रावणान्तःपुरं कपिः ॥ ३६ ॥

ददर्श सुमहातेजा न ददर्श च जानकीम् ।
निरीक्षमाणश्च तदा ताः स्त्रियः स महाकपिः ॥

जगाम महतीं चिन्तां धर्मसाध्वसशङ्कितः ।
परदारावरोधस्य प्रसुप्तस्य निरीक्षणम् ॥ ३७ ॥

इदं खलु ममात्यर्थं धर्मलोपं करिष्यति ।
न हि मे परदाराणां दृष्टिर्विषयवर्तिनी ॥ ३८ ॥

अयं चात्र मया दृष्टः परदारपरिग्रहः ।
तस्य प्रादुरभूच्चिन्ता पुनरन्या मनस्विनः ॥

निश्चितैकान्तचित्तस्य कार्यनिश्चयदर्शिनी ।
कामं दृष्टा मया सर्वा विश्वस्ता रावणस्त्रियः ॥

न हि मे मनसः किंचिद्वैकृत्यमुपपद्यते ।
मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्तने ॥

शुभाशुभास्ववस्थासु तच्च मे सुव्यवस्थितम् ।
नान्यत्र च मया शक्या वैदेही परिमार्गितुम् ॥

स्त्रियो हि स्त्रीषु दृश्यन्ते सर्वथा परिमार्गणे ।
यस्य सत्त्वस्य या योनिस्तस्यां तत्परिमार्ग्यते ॥

न शक्या प्रमदा नष्टा मृगीषु परिमार्गितुम् ।
तदिदं मार्गितं तावच्छुद्धेन मनसा मया ॥

रावणान्तःपुरं सर्वं दृश्यते न च जानकी ।
देवगन्धर्वकन्याश्च नागकन्याश्च वीर्यवान् ॥

अवेक्षमाणो हनुमान्नैवापश्यत जानकीम् ।
तामपश्यन्कपिस्तत्र पश्यंश्चान्या वरस्त्रियः ॥

अपक्रम्य तदा वीरः मध्यात्पुष्पचक्रमे
स भूयस्तु परं श्रीमान्मारुतिर्यत्नमास्थितः ।
आपानभूमिमुत्सृज्य तद्विचेतुं प्रचक्रमे ॥ ४७ ॥

इति एकादश सर्ग ॥



## द्वादशः सर्गः ॥



स तस्य मध्ये भवनस्य मारुति
र्लतागृहांश्चित्रगृहान्निशागृहान् ।
जगाम सीतां प्रति दर्शनोत्सुको
न चैव तां पश्यति चारुदर्शनाम् ॥ १ ॥

स चिन्तयामास ततो महाकपिः
प्रियामपश्यन्रघुनन्दनस्य ताम् ।
ध्रुवं हि सीता म्रियते यथा न मे
विचिन्वतो दर्शनमेति मैथिली ॥ २ ॥

सा राक्षसानां प्रवरेण जानकी
स्वशीलसंरक्षणतत्परा सती ।
अनेन नूनं परिदुष्टकर्मणा
हता भवेदार्यपथे वरे स्थिता ॥ ३ ॥

विरूपरूपा विकृता विवर्चसो
महानना दीर्घविरूपदर्शनाः ।

समीक्ष्य सा राक्षसराजयोषितो
  यथाहिता जनकेश्वरात्मजा ॥ ४ ॥

सीतामदृष्ट्वा ह्यनवाप्य पौरुषं
  विहृत्य कालं सह वानरैश्चिरम् ।
न मेऽस्ति सुग्रीवसमीपगा गतिः
  सुतीक्ष्णदण्डो बलवांश्च वानरः ॥ ५ ॥

दृष्टमन्तःपुरं सर्वं दृष्टा रावणयोषितः ।
न सीता दृश्यते साध्वी वृथा जातो मम श्रमः ।

किं नु मां वानराः सर्वे गतं वक्ष्यन्ति संगताः
गत्वा तत्र त्वया वीर किं कृतं तद्वदस्व नः ॥

अदृष्ट्वा किं प्रवक्ष्यामि तामहं जनकात्मजाम् ।
ध्रुवं प्रायमुपैष्यन्ति कालस्य व्यतिवर्तने ॥ ८ ।

किं वा वक्ष्यति वृद्धश्च जाम्बवानङ्गदश्च सः ।
गतं पारं समुद्रस्य वानराश्च समागताः ॥ ९ ।

अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम् ।
अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः ॥ १० ।

करोति सफलं जन्तोः कर्म यच्च करोति सः ।
तस्मादनिर्वेदकरं यत्नं कुर्यादनुत्तमम् ॥ ११ ॥

भूयस्तावद्विचेष्यामि देशान्रावणपालितान् ।
आपानशाला विचितास्तथा पुष्पगृहाणि च ॥

चित्रशालाश्च विचिता भूयः क्रीडागृहाणि च ।
निष्कुटान्तररथ्याश्च विमानानि च सर्वशः ॥

इति संचिन्त्य भूयोऽपि विचेतुमुपचक्रमे ।
भूमीगृहांश्चैत्यगृहान्गृहातिगृहकानपि ॥ १४ ॥

उत्पतन्निपतंश्चापि तिष्ठन्गच्छन्पुनः पुनः ।
अपावृण्वंश्च द्वाराणि कपाटान्यवघाटयन् ॥

प्रविशन्निष्पतंश्चापि प्रपतन्नुत्पतन्नपि ।
सर्वमप्यवकाशं स विचचार महाकपिः ॥ १६ ॥

चतुरङ्गुलमात्रोऽपि नावकाशः स विद्यते ।
रावणान्तःपुरे तस्मिन्यं कपिर्न जगाम सः ॥

प्राकारान्तररथ्याश्च वेदिकाश्चैत्यसंश्रयाः ।
दीर्घिकाः पुष्करिण्यश्च सर्वं तेनावलोकितम् ।

राक्षस्यो विविधाकारा विरूपा विकृतास्तदा ।
दृष्टा हनुमता तत्र न तु सा जनकात्मजा ॥

रूपेणाप्रतिमा लोके वरा विद्याधरस्त्रियः ।
दृष्टा हनुमता तत्र न तु राघवनन्दिनी ॥२०॥

नागकन्या वरारोहाः पूर्णचन्द्रनिभाननाः ।
दृष्टा हनुमता तत्र न तु सीता सुमध्यमा ॥

प्रमथ्य राक्षसेन्द्रेण नागकन्या बलाद्धृताः ।
दृष्टा हनुमता तत्र न सा जनकनन्दिनी ॥

सोऽपश्यंस्तां महाबाहुः पश्यंश्चान्या वरस्त्रियः ।
विषसाद मुहुर्धीमान्हनुमान्मारुतात्मजः ।

उद्योग वानरेन्द्राणां प्लवनं सागरस्य च ।
व्यर्थं वीक्ष्यानिलसुतश्चिन्तां पुनरुपागमत् ॥

अवतीर्य विमानाच्च हनुमान्मारुतात्मजः ।
चिन्तामुपजगामाथ शोकोपहतचेतन ॥ २८ ॥

इति द्वादशः सर्गः ॥



## त्रयोदशः सर्गः ॥



विमानात्तु सुसंक्रम्य प्राकारं हरिपुंगवः ।
हनुमान्वेगवानासीद्यथा विद्युद्घनान्तरे ॥ १ ॥

संपरिक्रम्य हनुमान्रावणस्य निवेशनम् ।
अदृष्ट्वा जानकीं सीतामब्रवीद्वचनं कपिः ॥ २ ॥

भूयिष्ठ लोळिता लङ्का रामस्य चरता प्रियम् ।
न हि पश्यामि वैदेहीं सीतां सर्वाङ्गशोभनाम् ॥

पल्वलानि तटाकानि सरांसि सरितस्तथा ।
नद्याऽनूपवनान्ताश्च दुर्गाश्च धरणीधराः ॥

लोळिता वसुधा सर्वा न तु पश्यामि जानकीम् ।
इह संपातिना सीता रावणस्य निवेशने ॥ ५ ॥

आख्याता गृध्रराजेन न च पश्यामि तामहम् ।
किं नु सीताथ वैदेही मैथिली जनकात्मजा ॥

उपतिष्ठेत विवशा रावणं दुष्टचारिणम् ।
क्षिप्रमुत्पततो मन्ये सीतामादाय रक्षसः ॥ ७ ॥

बिभ्यतो रामबाणानामन्तरा पतिता भवेत् ।
अथ वा ह्रियमाणायाः पथि सिद्धनिषेविते ॥

मन्ये पतितमार्याया हृदयं प्रेक्ष्य सागरम् ।
रावणस्योरुवेगेन भुजाभ्यां पीडितेन च ॥ ९ ॥

तया मन्ये विशालाक्ष्या त्यक्तं जीवितमार्यया ।
उपर्युपरि वा नूनं सागरं क्रमतस्तदा ॥ १० ॥

विवेष्टमाना पतिता समुद्रे जनकात्मजा ।
अहो क्षुद्रेण चानेन रक्षन्ती शीलमात्मनः ॥

अबन्धुर्भक्षिता सीता रावणेन तपस्विनी ।
अथ वा राक्षसेन्द्रस्य पत्नीभिरसितेक्षणा ॥

अदुष्टा दुष्टभावाभिर्भक्षिता सा भविष्यति ।
संपूर्णचन्द्रप्रतिमं पद्मपत्रनिभेक्षणम् ॥ १३ ॥

रामस्य ध्यायती वक्त्रं पञ्चत्वं कृपणा गता ।
हा राम लक्ष्मणेत्येवं हायोध्ये चेति मैथिली ॥

विलप्य बहु वैदेही न्यस्तदेहा भविष्यति ।
अथ वा निहिता मन्ये रावणस्य निवेशने ॥

नूनं खाद्यते सीता पञ्जरस्थेव शारिका ।
जनकस्य सुता सीता रामपत्नी सुमध्यमा ॥

कथमुत्पलपत्राक्षी रावणस्य वशं व्रजेत् ।
विनष्टा वा प्रणष्टा वा मृता वा जनकात्मजा ॥

रामस्य प्रियभार्यस्य न निवेदयितुं क्षमम् ।
निवेद्यमाने दोषः स्याद्दोषः स्यादनिवेदने ॥

कथं नु खलु कर्तव्यं विषमं प्रतिभाति मे ।
अस्मिन्नेवं गते कार्ये प्राप्तकालं क्षमं च किम् ॥

भवेदिति मतं भूयो हनुमान्प्रविचारयन् ।
यदि सीतामदृष्ट्वाहं वानरेन्द्रपुरीमितः ॥ २८ ॥

गमिष्यामि ततः को मे पुरुषार्थो भविष्यति ।
ममेदं लङ्घनं व्यर्थं सागरस्य भविष्यति ॥

प्रवेशश्चैव लङ्काया राक्षसानां च दर्शनम् ।
किं मां वक्ष्यति सुग्रीवो हरयो वा समागताः ॥

किष्किन्धां समनुप्राप्तौ तौ वा दशरथात्मजौ ।
गत्वा तु यदि काकुत्स्थं वक्ष्यामि परमप्रियम् ॥

न दृष्टेति मया सीता ततस्त्यक्ष्यति जीवितम्
पश्य दारुणं क्रूरं तीक्ष्णमिन्द्रियतापनम् ॥

सीतानिमित्तं दुर्वाक्यं श्रुत्वा स न भविष्यति ।
तं तु कृच्छ्रगतं दृष्ट्वा पञ्चत्वगतमानसम् ।

भृशानुरक्तो मेधावी न भविष्यति लक्ष्मण ।
विनष्टौ भ्रातरौ श्रुत्वा भरतोऽपि मरिष्यति ॥

भरतं च मृतं दृष्ट्वा शत्रुघ्नो न भविष्यति
पुत्रान्मृतान्समीक्ष्याथ न भविष्यन्ति मातरः ॥

कौसल्या च सुमित्रा च कैकेयी च न संशयः ।
कृतज्ञः सत्यसन्धश्च सुग्रीवः प्लवगाधिपः ।

रामं तथागतं दृष्ट्वा ततस्त्यक्ष्यति जीवितम्
दुर्मना व्यथिता दीना निरानन्दा तपस्विनी ॥

पीडिता भर्तृशोकेन रुमा त्यक्ष्यति जीवितम् ।
वालिजेन तु दुःखेन पीडिता शोककर्शिता ॥

पञ्चत्वं च गते राज्ञि तारापि न भविष्यति ।
मातापित्रोर्विनाशेन सुग्रीवव्यसनेन च ॥ ३१ ॥

कुमारोऽप्यङ्गदः कस्माद्धारयिष्यति जीवितम् ।
भर्तृजेन तु दुःखेन ह्यभिभूता वनौकसः ।

शिरांस्यभिहनिष्यन्ति तलैर्मुष्टिभिरेव च ।
सान्त्वेनानुप्रदानेन मानेन च यशस्विना ।

लालिताः कपिराजेन प्राणांस्त्यक्ष्यन्ति वानराः ।
न वनेषु न शैलेषु न निरोधेषु वा पुनः

क्रीडामनुभविष्यन्ति समेत्य कपिकुञ्जराः ।
सपुत्रदाराः सामात्या भर्तृव्यसनपीडिताः

शैलाग्रेभ्यः पतिष्यन्ति समेत्य विषमेषु च ।
विषमुद्बन्धनं वापि प्रवेशं ज्वलनस्य वा

उपवासमथो शस्त्रं प्रचरिष्यन्ति वानराः
घोरमारोदनं मन्ये गते मयि भविष्यति ॥

इक्ष्वाकुकुलनाशश्च नाशश्चैव वनौकसाम् ।
सोऽहं नैव गमिष्यामि किष्किन्धां नगरीमितः ॥

न च शक्ष्याम्यहं द्रष्टुं सुग्रीवं मैथिलीं विना
मय्यगच्छति चेहस्थे धर्मात्मानौ महारथौ ।

आश्रया वा भविष्यन्ते वानराश्च मनस्विनः ।
हस्तादानो मुखादानो नियतो वृक्षमूलिकः ॥

वानप्रस्थो भविष्यामि ह्यदृष्ट्वा जनकात्मजाम् ।
सागरानूपजे देशे बहुमूलफलोदके ॥ ४१ ॥

चितां कृत्वा प्रवेक्ष्यामि समिद्धमरणीसुतम् ।
उपविष्टस्य वा सम्यग्लिङ्गिनं साधयिष्यतः ॥

शरीरं भक्षयिष्यन्ति वायसाः श्वापदानि च ।
इदं महर्षिभिर्दृष्टं निर्याणमिति मे मतिः ॥ ४३ ॥

सम्यगापः प्रवेक्ष्यामि न चेत्पश्यामि जानकीम् ।
सुजातमूला सुभगा कीर्तिमाला यशस्विनी ॥

प्रभग्ना चिररात्रीयं मम सीतामपश्यतः ।
तापसो वा भविष्यामि नियतो वृक्षमूलिकः ॥

नेतः प्रतिगमिष्यामि तामदृष्ट्वासितेक्षणाम् ।
यदीतः प्रतिगच्छामि सीतामनधिगम्य ताम् ॥

अङ्गदः सह तैः सर्वैर्वानरैर्न भविष्यति ।
विनाशे बहवो दोषा जीवन्भद्राणि पश्यति ॥

तस्मात्तत्राजान्वरिष्यामि ध्रुवो जीवति संगमः ।
एवं बहुविधं दुःखं मनसा धारयन्मुहुः ॥४८॥

नाध्यगच्छत्तदा पारं शोकस्य कपिकुञ्जरः ।
रावणं वा वधिष्यामि दशग्रीवं महाबलम् ॥

काममस्तु हृता सीता प्रत्याचीर्णं भविष्यति ।
अथ वैनं समुत्क्षिप्य उपर्युपरि सागरम् ॥

रामायोपहरिष्यामि पशुं पशुपतेरिव ।
इति चिन्तां समापन्नः सीतामनधिगम्य ताम् ॥

ध्यानशोकपरीतात्मा चिन्तयामास वानरः ।
यावत्सीतां हि पश्यामि रामपत्नीं यशस्विनीम् ॥

तावदेतां पुरीं लङ्कां विचिनोमि पुनः पुनः ।
संपातिवचनाच्चापि रामं यद्यानयाम्यहम् ॥

अपश्यन्राघवो भार्यां निर्दहेत्सर्ववानरान् ।
इहैव नियताहारो वत्स्यामि नियतेन्द्रियः ॥

न मत्कृते विनश्येयुः सर्वे ते नरवानराः ।
अशोकवनिका चेयं दृश्यते या महाद्रुमा ॥

इमामधिगमिष्यामि न हीयं विचिता मया ।
वसवो रुद्रास्तथादित्या अश्विनौ मरुतोऽपि च ॥

नमस्कृत्वा गमिष्यामि रक्षसां शोकवर्धनः ।
जित्वा तु राक्षसान्सर्वानिक्ष्वाकुकुलनन्दिनीम् ॥

संप्रदास्यामि रामाय यथा सिद्धिं तपस्विने ।
स मुहूर्तमिव ध्यात्वा चिन्तावग्रथितेन्द्रियः ।
उदतिष्ठन्महातेजा हनूमान्मारुतात्मजः ॥ ५८ ॥

नमोऽस्तु रामाय सलक्ष्मणाय
देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो
नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ॥ ५९ ॥

स तेभ्यस्तु नमस्कृत्वा सुग्रीवाय च मारुतिः ।
दिशः सर्वाः समालोक्य अशोकवनिकां प्रति ॥

स गत्वा मनसा पूर्वमशोकवनिकां शुभाम् ।
उत्तरं चिन्तयामास वानरो मारुतात्मजः ॥

ध्रुवं तु रक्षोबहुला भविष्यति वनाकुला ।
अशोकवनिका चिन्त्या सर्वसंस्कारसंस्कृता ॥

रक्षिणश्चात्र विहिता नूनं रक्षन्ति पादपान्।
भगवानपि सर्वात्मा नातिक्षोभं प्रयाति वै॥

संक्षिप्तोऽयं ममात्मा च रामार्थे रावणस्य च।
सिद्धिं मे संविधास्यन्ति देवाः सर्षिगणास्त्विह॥

ब्रह्मा स्वयम्भूर्भगवान्देवाश्चैव दिशन्तु मे।
सिद्धिमग्निश्च वायुश्च पुरुहूतश्च वज्रभृत्॥ ६५॥

वरुणः पाशहस्तश्च सोमादित्यौ तथैव च।
अश्विनौ च महात्मानौ मरुतः सर्व एव च॥

सिद्धिं सर्वाणि भूतानि भूतानां चैव यः प्रभुः।
दास्यन्ति मम ये चान्ये अदृष्टाः पथि गोचराः॥

तदुन्नसं पाण्डुरदन्तमव्रणं
शुचिस्मितं पद्मपलाशलोचनम्।
द्रक्ष्ये तदार्यावदनं कदा न्वहं
प्रसन्नताराधिपतुल्यदर्शनम्॥ ६८॥

क्षुद्रेण पापेन नृशंसकर्मणा
सुदारुणालङ्कृतवेषधारिणा।

रक्षाभिभूता अबला तपस्विनी
कथं नु मे दृष्टिपथेऽद्य सा भवेत् ।६९।

इति त्रयोदशः सर्गः ॥



## चतुर्दशः सर्गः



स मुहूर्तमिव ध्यात्वा मनसा चाधिगम्य ताम्
अवप्लुतो महातेजाः प्राकारं तस्य वेश्मनः ॥

स तु संहृष्टसर्वाङ्गः प्राकारस्थो महाकपिः ।
पुष्पिताग्रान्वसन्तादौ ददर्श विविधान्द्रुमान् ॥

सालानशोकान्भव्यांश्च चम्पकांश्च सुपुष्पितान्
उद्दालकान्नागवृक्षांश्चूतान्कपिमुखानपि । ३ ।

अथाम्रवणसंछन्नां लताशतसमावृताम्
ज्यामुक्त इव नाराचः पुप्लुवे वृक्षवाटिकाम् ॥

स प्रविश्य विचित्रां तां विहगैरभिनादिताम् ।
राजतैः काञ्चनैश्चैव पादपैः सर्वतो वृताम् ।

विहगैर्मृगसंघैश्च विचित्रां चित्रकाननाम् ।
उदितादित्यसंकाशां ददर्श हनुमान्कपिः ॥६॥

वृतां नानाविधैर्वृक्षैः पुष्पोपगफलोपगैः ।
कोकिलैर्भृङ्गराजैश्च मत्तैर्नित्यनिषेविताम् ॥ ७ ॥

प्रहृष्टमनुजे काले मृगपक्षिसमाकुले ।
मत्तबर्हिणसंघुष्टां नानाद्विजगणायुताम् ॥ ८ ॥

मार्गमाणो वरारोहां राजपुत्रीमनिन्दिताम् ।
सुखप्रसुप्तान्विहगान्बोधयामास वानरः ॥ ९ ॥

उत्पतद्भिर्द्विजगणैः पक्षैः शाखाः समाहताः ।
अनेकवर्णा विविधा मुमुचुः पुष्पवृष्टयः ॥१०॥

पुष्पावकीर्णः शुशुभे हनुमान्मारुतात्मजः ।
अशोकवनिकामध्ये यथा पुष्पमयो गिरिः ॥

दिशः सर्वाः प्रधावन्तं वृक्षषण्डगतं कपिम् ।
दृष्ट्वा सर्वाणि भूतानि वसन्त इति मेनिरे ॥

वृक्षेभ्यः पतितैः पुष्पैरवकीर्णा पृथग्विधैः ।
रराज वसुधा तत्र प्रमदेव विभूषिता ॥ १३ ॥

तरस्विना ते तरवस्तरसाभिप्रकम्पिताः ।
कुसुमानि विचित्राणि ससृजुः कपिना तदा ॥

निर्धूतपत्रशिखराः शीर्णपुष्पफला द्रुमाः ।
निक्षिप्तवस्त्राभरणा धूर्ता इव पराजिताः ॥१५॥

हनूमता वेगवता कम्पितास्ते नगोत्तमाः ।
पुष्पपर्णफलान्याशु मुमुचुः पुष्पशालिनः ॥

विहंगसंघैर्हीनास्ते स्कन्धमात्राश्रया द्रुमाः ।
बभूवुरगमाः सर्वे मारुतेनेव निर्धुताः ॥१७॥

निर्धूतकेशी युवतिर्यथा मृदितवर्णका ।
निष्पीतशुभदन्तोष्ठी नखैर्दन्तैश्च विक्षता ॥

तथा लाङ्गूलहस्तैश्च चरणाभ्यां च मर्दिता ।
बभूवाशोकवनिका प्रभग्नवरपादपा ॥१९॥

महालतानां दामानि व्यधमत्तरसा कपिः ।
यथा प्रावृषि विन्ध्यस्य मेघजालानि मारुतः ॥

स तत्र मणिभूमीश्च राजतीश्च मनोरमाः ।
तथा काञ्चनभूमीश्च ददर्श विचरन्कपिः ॥२१॥

वापीश्च विविधाकाराः पूर्णाः परमवारिणा ।
महार्हैर्मणिसोपानैरुपपन्नास्ततस्ततः ॥ २२ ॥

मुक्ताप्रवालसिकताः स्फाटिकान्तरकुट्टिमाः ।
काञ्चनैस्तरुभिश्चित्रैस्तीरजैरुपशोभिताः ॥

फुल्लपद्मोत्पलवनाश्चक्रवाकोपकूजिताः ।
नात्यूहरुतसंघुष्टा हंससारसनादिताः ॥ २४ ॥

दीर्घाभिर्द्रुमयुक्ताभिः सरिद्भिश्च समन्ततः ।
अमृतोपमतोयाभिः शिवाभिरुपसंस्कृताः ॥

लताशतैरवतताः सन्तानकुसुमावृताः ।
नानागुल्मावृतघनाः करवीरकृतान्तराः ॥

ततोऽम्बुधरसंकाशं प्रवृद्धशिखरं गिरिम् ।
विचित्रकूटं कूटैश्च सर्वतः परिवारितम् ॥ २७ ॥

शिलागृहैरवततं नानावृक्षैः समाकुलम् ।
ददर्श हरिशार्दूलो रम्यं जगति पर्वतम् ॥ २८ ॥

ददर्श च नगात्तस्मान्नदीं निपतितां कपिः ।
अङ्कादिव समुत्पत्य प्रियस्य पतितां प्रियाम् ।

अङ्के निपतिताग्रैश्च पादपैरुपशोभिताम् ।
वार्यमाणामिव क्रुद्धां प्रमदां प्रियबन्धुभिः ॥

पुनरावृत्ततोयां च ददर्श स महाकपिः ।
प्रसन्नामिव कान्तस्य कान्तां पुनरुपस्थिताम् ॥

तस्याददूराच्च पद्मिन्यो नानाद्विजगणायुताः ।
ददर्श हरिशार्दूलो हनुमान्मारुतात्मजः ॥३२॥

कृत्रिमां दीर्घिकां चापि पूर्णां शीतेन वारिणा ।
मणिप्रवरसोपानां मुक्तासिकतशोभिताम् ॥

विविधैर्मृगसङ्घैश्च विचित्रां चित्रकाननाम् ।
प्रासादैः सुमहद्भिश्च निर्मितैर्विश्वकर्मणा ॥ ३४

काननैः कृत्रिमैश्चापि सर्वतः समलंकृताम् ।
ये केचित्पादपास्तत्र पुष्पोपगफलोपगाः ॥

सच्छत्राः सवितर्दीकाः सर्वे सौवर्णवेदिकाः ।
लताप्रतानैर्बहुभिः पर्णैश्च बहुभिर्वृताम् ॥ ३६ ।

काञ्चनीं शिंशुपामेकां ददर्श हनुमान्कपिः ।
वृतां हेममयीभिस्तु वेदिकाभिः समन्ततः ॥

सोऽपश्यद्भूमिभागांश्च गर्तप्रस्रवणानि च ।
सुवर्णवृक्षानपरान्ददर्श शिखिसंनिभान् ॥ ३८॥

तेषां द्रुमाणां प्रभया मेरोरिव दिवाकरः ।
अमन्यत तदा वीरः काञ्चनोऽस्मीति वानरः ॥

तां काञ्चनैस्तरुगणैर्मारुतेन च वीजिताम् ।
किङ्किणीशतनिर्घोषां दृष्ट्वा विस्मयमागमत् ।

स पुष्पिताग्रां रुचिरां तरुणाङ्कुरपल्लवाम् ।
तामारुह्य महाबाहुः शिंशुपां पर्णसंवृताम् ॥

इतो द्रक्ष्यामि वैदेहीं रामदर्शनलालसाम् ।
इतश्चेतश्च दुःखार्तां संपतन्तीं यदृच्छया । ४२॥

अशोकवनिका चेयं दृढं रम्या दुरात्मनः ।
चम्पकैश्चन्दनैश्चापि बकुलैश्च विभूषिता । ४३॥

इयं च नलिनी रम्या द्विजसंघनिषेविता ।
इमां सा राममहिषी ध्रुवमेष्यति जानकी ॥

सा रामा राममहिषी राघवस्य प्रिया सती ।
वनसंचारकुशला ध्रुवमेष्यति जानकी ॥ ४५॥

अथ वा मृगशावाक्षी वनस्यास्य विचक्षणा ।
वनमेष्यति सार्येह रामचिन्तानुकर्शिता ॥४६॥

रामशोकाभिसंतप्ता सा देवी वामलोचना ।
वनवासे रता नित्यमेष्यते वनचारिणी ॥४७॥

वनेचराणां सततं नूनं स्पृहयते पुरा ।
रामस्य दयिता भार्या जनकस्य सुता सती ॥

संध्याकालमनाः श्यामा ध्रुवमेष्यति जानकी ।
नदीं चेमां शिवजलां संध्यार्थे वरवर्णिनी ॥

तस्याश्चाप्यनुरूपेयमशोकवनिका शुभा ।
शुभा या पार्थिवेन्द्रस्य पत्नी रामस्य संमता ॥

यदि जीवति सा देवी ताराधिपनिभानना ।
आगमिष्यति सावश्यमिमां शिवजलां नदीम् ॥

एवं तु मत्वा हनुमान्महात्मा
प्रतीक्षमाणो मनुजेन्द्रपत्नीम् ।
अवेक्षमाणश्च ददर्श सर्वं
सुपुष्पिते पर्णघने निलीनः ॥५२॥

इति चतुर्दशः सर्गः ॥

## पञ्चदशः सर्गः ॥



स वीक्षमाणस्तत्रस्थो मार्गमाणश्च मैथिलीम् ।
अवेक्षमाणश्च महीं सर्वां तामन्ववैक्षत १ ॥

संतानकलताभिश्च पादपैरुपशोभिताम् ।
दिव्यगन्धरसोपेतां सर्वत समलंकृताम् २ ॥

तां स नन्दनसंकाशां मृगपक्षिभिरावृताम् ।
हर्म्यप्रासादसंबाधां कोकिलाकुलनिस्वनाम् ॥

काञ्चनोत्पलपद्माभिर्वापीभिरुपशोभिताम्
बह्वासनकुथोपेतां बहुभूमिगृहायुताम् ॥ ४ ॥

सर्वर्तुकुसुमै रम्यां फलवद्भिश्च पादपै
पुष्पितानामशोकानां श्रिया सूर्योदयप्रभाम् ॥

प्रदीप्तामिव तत्रस्थो हनूमानन्ववैक्षत
निष्पत्रशाखां विहगैः क्रियमाणामिवासकृत् ॥

विनिष्पतद्भि शतशश्चित्रै पुष्पावतंसकैः ।
आमूलपुष्पनिचितैरशोकैः शोकनाशनैः ॥ ७ ॥

पुष्पभारातिभारैश्च स्पृशद्भिरिव मेदिनीम् ।
कर्णिकारैः कुसुमितैः किंशुकैश्च सुपुष्पितैः ॥

स देशः प्रभया तेषां प्रदीप्त इव सर्वतः ।
पुंनागाः सप्तपर्णाश्च चम्पकोद्दालकास्तथा ॥

विवृद्धमूला बहवः शोभन्ते स्म सुपुष्पिताः ।
शातकुम्भनिभाः केचित्केचिदग्निशिखोपमाः ॥

नीलाञ्जननिभाः केचित्तत्राशोकाः सहस्रशः ।
नन्दनं विविधोद्यानं चित्रं चैत्ररथं यथा ॥

अतिवृत्तमिवाचिन्त्यं दिव्यं रम्यं श्रियावृतम् ।
द्वितीयमिव चाकाशं पुष्पज्योतिर्गणायुतम् ॥

पुष्परत्नशतैश्चित्रं पञ्चमं सागरं यथा
सर्वर्तुपुष्पैर्निचितं पादपैर्मधुगन्धिभिः ॥ १३ ॥

नानानिनादैरुद्यानं रम्यं मृगगणैर्द्विजैः ।
अनेकगन्धप्रवहं पुण्यगन्धं मनोरमम् ॥ १४ ॥

शैलेन्द्रमिव गन्धाढ्यं द्वितीयं गन्धमादनम् ।
अशोकवनिकायां तु तस्यां वानरपुंगवः ॥

स ददर्शाविदूरस्थं चैत्यप्रासादमुच्छ्रितम् ।
मध्ये स्तम्भसहस्रेण स्थितं कैलासपाण्डुरम् ॥

प्रवालकृतसोपानं तप्तकाञ्चनवेदिकम् ।
मुष्णन्तमिव चक्षूंषि द्योतमानमिव श्रिया ॥

विमलं प्रांशुभावत्वादुल्लिखन्तमिवाम्बरम् ।
ततो मलिनसंवीतां राक्षसीभिः समावृताम् ॥

उपवासकृशां दीनां निःश्वसन्तीं पुनः पुनः ।
ददर्श शुक्लपक्षादौ चन्द्ररेखामिवामलाम् ॥

मन्दं प्रख्यायमानेन रूपेण रुचिरप्रभाम् ।
पिनद्धां धूमजालेन शिखामिव विभावसोः ॥

पीतेनैकेन संवीतां क्लिष्टेनोत्तमवाससा ।
सपङ्कामनलंकारां विपद्मामिव पद्मिनीम् ॥

व्रीडितां दुःखसंतप्तां परिम्लानां तपस्विनीम्
ग्रहेणाङ्गारकेणेव पीडितामिव रोहिणीम् ॥

अश्रुपूर्णमुखीं दीनां कृशामनशनेन च ।
शोकध्यानपरां दीनां नित्यं दुःखपरायणाम्

प्रियं जनमपश्यन्तीं पश्यन्तीं राक्षसीगणम् ।
स्वगणेन मृगीं हीनां श्वगणाभिवृतामिव ॥

नीलनागाभया वेण्या जघनं गतयैकया ।
नीलया नीरदापाये वनराज्या महीमिव ॥

सुखार्हां दुःखसंतप्तां व्यसनानामकोविदाम् ।
तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम् ॥

तर्कयामास सीतेति कारणैरुपपादिभिः ।
ह्रियमाणा तदा तेन रक्षसा कामरूपिणा ॥

यथारूपा हि दृष्टा वै तथारूपेयमङ्गना ।
पूर्णचन्द्राननां सुभ्रूं चारुवृत्तपयोधराम् ॥

कुर्वन्तीं प्रभया देवीं सर्वा वितिमिरा दिशः ।
तां नीलकेशीं बिम्बोष्ठीं सुमध्यां सुप्रतिष्ठिताम् ॥

सीतां पद्मपलाशाक्षीं मन्मथस्य रतिं यथा ।
इष्टां सर्वस्य जगतः पूर्णचन्द्रप्रभामिव ॥ ३० ॥

भूमौ सुतनुमासीनां नियतामिव तापसीम् ।
निःश्वासबहुलां भीरुं भुजगेन्द्रवधूमिव ॥

शोकजालेन महता विततेन न राजतीम्।
संसक्तां धूमजालेन शिखामिव विभावसोः॥

तां स्मृतीमिव संदिग्धामृद्धिं सकलुषामिव।
विहतामिव च श्रद्धामाशां प्रतिहतामिव ३३॥

सोपसर्गां यथा सिद्धिं बुद्धिं सकलुषामिव।
अभूतेनापवादेन कीर्तिं निपतितामिव ३४॥

रामोपरोधव्यथितां रक्षोहरणकर्शिताम्।
अबलां मृगशावाक्षीं वीक्षमाणां समन्ततः॥

बाष्पाम्बुपरिपूर्णेन कृष्णवक्राक्षिपक्ष्मणा।
वदनेनाप्रसन्नेन निःश्वसन्तीं पुनः पुनः॥

मलपङ्कधरां दीनां मण्डनार्हाममण्डिताम्।
प्रभां नक्षत्रराजस्य कालमेघैरिवावृताम्॥

तस्य संदिदिहे बुद्धिर्मुहुः सीतां निरीक्ष्य तु।
आम्नायानामयोगेन विद्यां प्रशिथिलामिव॥

दुःखेन बुबुधे सीतां हनुमाननलंकृताम्।
संस्कारेण यथा हीनां वाचमर्थान्तरं गताम्॥

तां समीक्ष्य विशालाक्षीं राजपुत्रीमनिन्दिताम् ।
तर्कयामास सीतेति कारणैरुपपादिभिः ॥

वैदेह्या यानि चाङ्गेषु तदा रामोऽन्वकीर्तयत् ।
तान्याभरणजालानि शाखाशोभीन्यलक्षयत् ॥

सुकृतौ कर्णवेष्टौ च श्वदंष्ट्रौ च सुसंस्थितौ ।
मणिविद्रुमचित्राणि हस्तेष्वाभरणानि च ॥

श्यामानि चिरयुक्तत्वात्तथा संस्थानवन्ति च ।
तान्येवैतानि मन्येऽहं यानि रामोऽन्वकीर्तयत् ॥

तत्र यान्यवहीनानि तान्यहं नोपलक्षये ।
यान्यस्या नावहीनानि तानीमानि न संशयः ॥

पीतं कनकपट्टाभं स्रस्तं तद्वसनं शुभम् ।
उत्तरीयं नगासक्तं तदा दृष्टं प्लवंगमैः ॥ ४५ ॥

भूषणानि विचित्राणि दृष्टानि धरणीतले ।
अनयैवापविद्धानि स्वनवन्ति महान्ति च ॥

इदं चिरगृहीतत्वाद्वसनं क्लिष्टवत्तरम् ।
तथापि नूनं तद्वर्णं तथा श्रीमद्यथेतरत् ॥४७॥

इयं कनकवर्णाङ्गी रामस्य महिषी प्रिया ।
प्रणष्टापि सती यास्य मनसो न प्रणश्यति ॥

इयं सा यत्कृते रामश्चतुर्भिः परितप्यते ।
कारुण्येनानृशंस्येन शोकेन मदनेन च ॥ ४९॥

स्त्री प्रणष्टेति कारुण्यादाश्रितेत्यानृशंस्यतः ।
पत्नी नष्टेति शोकेन प्रियेति मदनेन च ॥ ५०॥

अस्या देव्या यथा रूपमङ्गप्रत्यङ्गसौष्ठवम् ।
रामस्य च यथारूपं तस्येयमसितेक्षणा ॥ ५१॥

अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम् ।
तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति ॥ ५२॥

दुष्करं कृतवान्रामो हीनो यदनया प्रभुः ।
धारयत्यात्मनो देहं न शोकेनावसीदति ॥ ५३॥

दुष्करं कुरुते रामो य इमां मत्तकाशिनीम् ।
विना सीतां महाबाहुर्मुहूर्तमपि जीवति ॥ ५४॥

एवं सीतां तदा दृष्ट्वा हृष्टः पवनसंभवः ।
जगाम मनसा रामं प्रशशंस च तं प्रभुम् ॥

इति पञ्चदशः सर्गः ॥

## षोडशः सर्गः ॥



प्रशस्य तु प्रशस्तव्यां सीतां तां हरिपुंगवः ।
गुणाभिरामं रामं च पुनश्चिन्तापरोऽभवत् ॥

स मुहूर्तमिव ध्यात्वा बाष्पपर्याकुलेक्षणः ।
सीतामाश्रित्य तेजस्वी हनुमान्विललाप ह ॥

मान्या गुरुविनीतस्य लक्ष्मणस्य गुरुप्रिया ।
यदि सीतापि दुःखार्ता कालो हि दुरतिक्रमः ॥

रामस्य व्यवसायज्ञा लक्ष्मणस्य च धीमतः ।
नात्यर्थं क्षुभ्यते देवी गङ्गेव जलदागमे ॥ ४ ॥

तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम् ।
राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा ॥ ५ ॥

तां दृष्ट्वा नवहेमाभां लोककान्तामिव श्रियम् ।
जगाम मनसा रामं वचनं चेदमब्रवीत् ॥ ६ ॥

अस्या हेतोर्विशालाक्ष्या हतो वाली महाबलः ।
रावणप्रतिमो वीर्ये कबन्धश्च निपातितः ॥७॥

विराधश्च हतः संख्ये राक्षसो भीमविक्रमः ।
वने रामेण विक्रम्य महेन्द्रेणेव शम्बरः ॥ ८ ॥

चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ।
निहतानि जनस्थाने शरैरग्निशिखोपमैः ॥ ९ ॥

खरश्च निहतः संख्ये त्रिशिराश्च निपातितः ।
दूषणश्च महातेजा रामेण विदितात्मना ॥ १० ॥

ऐश्वर्यं वानराणां च दुर्लभं वालिपालितम् ।
अस्या निमित्ते सुग्रीवः प्राप्तवाँल्लोकसत्कृतम् ॥

सागरश्च मया क्रान्तः श्रीमान्नदनदीपतिः ।
अस्या हेतोर्विशालाक्ष्याः पुरी चेयं निरीक्षिता ॥

यदि रामः समुद्रान्तां मेदिनीं परिवर्तयेत् ।
अस्याः कृते जगच्चापि युक्तमित्येव मे मतिः ॥

राज्यं वा त्रिषु लोकेषु सीता वा जनकात्मजा ।
त्रैलोक्यराज्यं सकलं सीताया नाप्नुयात्कलाम् ॥

इयं सा धर्मशीलस्य मैथिलस्य महात्मनः ।
सुता जनकराजस्य सीता भर्तृदृढव्रता ॥ १५

उत्थिता मेदिनीं भित्त्वा क्षेत्रे हलमुखक्षते ।
पद्मरेणुनिभैः कीर्णा शुभैः केदारपांसुभिः ॥

विक्रान्तस्यार्यशीलस्य संयुगेष्वनिवर्तिनः ।
स्नुषा दशरथस्यैषा ज्येष्ठा राज्ञो यशस्विनी ॥

धर्मज्ञस्य कृतज्ञस्य रामस्य विदितात्मनः ।
इयं सा दयिता भार्या राक्षसीवशमागता ॥

सर्वान्भोगान्परित्यज्य भर्तृस्नेहबलात्कृता ।
अचिन्तयित्वा दुःखानि प्रविष्टा निर्जनं वनम् ॥

संतुष्टा फलमूलेन भर्तृशुश्रूषणे रता ।
या परां भजते प्रीतिं वनेऽपि भवने यथा ॥

सेयं कनकवर्णाङ्गी नित्यं सुस्मितभाषिणी ।
सहते यातनामेतामनर्थानामभागिनी ॥ २१ ॥

इमां तु शीलसंपन्नां द्रष्टुमर्हति राघवः ।
रावणेन प्रमथितां प्रपामिव पिपासितः ॥ २२॥

अस्या नूनं पुनर्लाभाद्राघवः प्रीतिमेष्यति ।
राजा राज्यात्परिभ्रष्टः पुनः प्राप्येव मेदिनीम् ॥

कामभोगैः परित्यक्ता हीना बन्धुजनेन च।
धारयत्यात्मनो देहं तत्समागमकाङ्क्षिणी ॥ २३ ॥

नैषा पश्यति राक्षस्यो नेमान्पुष्पफलद्रुमान्।
एकस्थहृदया नूनं राममेवानुपश्यति ॥ २५ ॥

भर्ता नाम परं नार्या भूषणं भूषणादपि।
एषा विरहिता तेन भूषणार्हा न शोभते ॥

दुष्करं कुरुते रामो हीनो यदनया प्रभुः।
धारयत्यात्मनो देहं न दुःखेनावसीदति ॥

इमामसितकेशान्तां शतपत्रनिभेक्षणाम्।
सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथितं मनः ॥

क्षितिक्षमा पुष्करसंनिभाक्षी
या रक्षिता राघवलक्ष्मणाभ्याम्।
सा राक्षसीभिर्विकृतेक्षणाभिः
संरक्ष्यते सम्प्रति वृक्षमूले। २९ ॥

हिमहतनलिनीव नष्टशोभा
व्यसनपरम्परयातिपीड्यमाना।

सहचररहितेव चक्रवाकी
जनकसुता कृपणां दशां प्रपन्ना ॥३०

अस्या हि पुष्पावनताग्रशाखाः
शोकं दृढं वै जनयन्त्यशोकाः।
हिमव्यपायेन च मन्दरश्मि
रभ्युत्थितो नैकसहस्ररश्मिः ॥ ३१ ॥

इत्येवमर्थं कपिरन्ववेक्ष्य
सीतेयमित्येव निविष्टबुद्धिः।
संश्रित्य तस्मिन्निषसाद वृक्षे
बली हरीणामृषभस्तरस्वी ॥ ३२ ॥

इति षोडशः सर्गः ॥



सप्तदशः सर्गः ॥



ततः कुमुदषण्डाभो निर्मलो निर्मलं स्वयम्।
प्रजगाम नभश्चन्द्रो हंसो नीलमिवोदकम् ॥१॥

साचिव्यमिव कुर्वन्स प्रभया निर्मलप्रभः ।
चन्द्रमा रश्मिभिः शीतैः सिषेवे पवनात्मजम् ॥

स ददर्श ततः सीतां पूर्णचन्द्रनिभाननाम् ।
शोकभारैरिव न्यस्तां भारैर्नावमिवाम्भसि ॥

दिदृक्षमाणो वैदेहीं हनुमान्पवनात्मजः ।
स ददर्शाविदूरस्था राक्षसीर्घोरदर्शनाः ॥ ४ ॥

एकाक्षीमेककर्णां च कर्णप्रावरणां तथा ।
अकर्णां शङ्कुकर्णां च मस्तकोच्छ्वासनासिकाम् ॥

अतिकायोत्तमाङ्गीं च तनुदीर्घशिरोधराम् ।
ध्वस्तकेशीं तथाकेशीं केशकम्बलधारिणीम् ॥

लम्बकर्णललाटां च लम्बोदरपयोधराम् ।
लम्बोष्ठीं चिबुकोष्ठीं च लम्बास्यां लम्बजानुकाम्

ह्रस्वां दीर्घां तथा कुब्जां विकटां वामनां तथा ।
करालां भुग्नवक्त्रां च पिङ्गाक्षीं विकृताननाम् ॥

विकृताः पिङ्गलाः कालीः क्रोधनाः कलहप्रियाः ।
कालायसमहाशूलकूटमुद्गरधारिणीः ॥ ९ ॥

वराहमृगशार्दूलमहिषाजशिवामुखीः ।
गजोष्ट्रहयपादीश्च निखातशिरसोऽपराः ॥१०॥

एकहस्तैकपादाश्च खरकर्ण्यश्वकर्णिकाः ।
गोकर्णीर्हस्तिकर्णीश्च हरिकर्णीस्तथापराः ॥

अनासा अतिनासाश्च तिर्यङ्नासा विनासिकाः ।
गजसंनिभनासाश्च ललाटोच्छ्वासनासिकाः ॥

हस्तिपादा महापादा गोपादाः पादचूलिकाः ।
अतिमात्रशिरोग्रीवा अतिमात्रकुचोदरीः ॥१३॥

अतिमात्रास्यनेत्राश्च दीर्घजिह्वानखास्तथा ।
अजामुखीर्हस्तिमुखीर्गोमुखीः सूकरीमुखीः ॥

हयोष्ट्रखरवक्त्राश्च राक्षसीर्घोरदर्शनाः ।
शूलमुद्गरहस्ताश्च क्रोधनाः कलहप्रियाः ॥१५॥

कराला धूम्रकेशीश्च राक्षसीर्विकृताननाः ।
पिबन्तीः सततं पानं सदा मांससुराप्रियाः ॥

मांसशोणितदिग्धाङ्गीर्मांसशोणितभोजनाः ।
ता ददर्श कपिश्रेष्ठो रोमहर्षणदर्शनाः ॥१७॥

स्कन्धवन्तमुपासीनाः परिवार्य वनस्पतिम् ।
तस्याधस्ताच्च तां देवीं राजपुत्रीमनिन्दिताम् ॥

लक्षयामास लक्ष्मीवान्हनुमाञ्जनकात्मजाम् ।
निष्प्रभां शोकसंतप्तां मलसंकुलमूर्धजाम् ॥

क्षीणपुण्यां च्युतां भूमौ तारां निपतितामिव ।
चारित्र्यव्यपदेशाढ्यां भर्तृदर्शनदुर्गताम् ॥२०॥

भूषणैरुत्तमैर्हीनां भर्तृवात्सल्यभूषणाम् ।
राक्षसाधिपसंरुद्धां बन्धुभिश्च विनाकृताम् ॥

वियूथां सिंहसंरुद्धां बद्धां गजवधूमिव ।
चन्द्ररेखां पयोदान्ते शारदाभ्रैरिवावृताम् ॥

क्लिष्टरूपामसंस्पर्शादयुक्तामिव वल्लकीम् ।
सीतां भर्तृवशे युक्तामयुक्तां राक्षसीवशे ॥२३॥

अशोकवनिकामध्ये शोकसागरमाप्लुताम् ।
ताभिः परिवृतां तत्र सग्रहामिव रोहिणीम् ॥

ददर्श हनुमान्देवीं लतामकुसुमामिव ।
सा मलेन च दिग्धाङ्गी वपुषा चाप्यलंकृता ॥

मृणाली पङ्कदिग्धेव विभाति न विभाति च ।
मलिनेन तु वस्त्रेण परिक्लिष्टेन भामिनीम् ॥

संवृतां मृगशावाक्षीं ददर्श हनुमान्कपिः ।
तां देवीं दीनवदनामदीनां भर्तृतेजसा ॥ २७॥

रक्षितां स्वेन शीलेन सीतामसितलोचनाम् ।
तां दृष्ट्वा हनुमान्सीतां मृगशावनिभेक्षणाम् ॥

मृगकन्यामिव त्रस्तां वीक्षमाणां समन्ततः ।
दहन्तीमिव निःश्वासैर्वृक्षान्पल्लवधारिणः ॥

संघातमिव शोकानां दुःखस्योर्मिमिवोत्थिताम् ।
तां समां सुविभक्ताङ्गीं विनाभरणशोभिनीम् ॥

प्रहर्षमतुलं लेभे मारुतिः प्रेक्ष्य मैथिलीम् ।
हर्षजानि च सोऽश्रूणि तां दृष्ट्वा मदिरेक्षणाम् ॥

मुमोच हनुमांस्तत्र नमश्चक्रे च राघवम् ।
नमस्कृत्वा स रामाय लक्ष्मणाय च वीर्यवान् ।
सीतादर्शनसंहृष्टो हनुमान्संवृतोऽभवत् ॥ ३२ ॥

इति सप्तदशः सर्गः ॥

## अष्टादशः सर्गः ॥

तथा विप्रेक्षमाणस्य वनं पुष्पितपादपम् ।
विचिन्वतश्च वैदेहीं किंचिच्छेषा निशाभवत् ॥

षडङ्गवेदविदुषां क्रतुप्रवरयाजिनाम् ।
शुश्राव ब्रह्मघोषांश्च विरात्रे ब्रह्मरक्षसाम् ॥

अथ मङ्गलवादित्रैः शब्दैः श्रोत्रमनोहरैः ।
प्राबुध्यत महाबाहुर्दशग्रीवो महाबलः ॥ ३ ॥

विबुध्य तु यथाकालं राक्षसेन्द्रः प्रतापवान् ।
स्रस्तमाल्याम्बरधरो वैदेहीमन्वचिन्तयत् ॥ ४॥

भृशं नियुक्तस्तस्यां च मदनेन मदोत्कटः ।
न स तं राक्षसः कामं शशाकात्मनि गूहितुम् ॥

स सर्वाभरणैर्युक्तो बिभ्रच्छ्रियमनुत्तमाम् ।
तां नगैर्बहुभिर्जुष्टां सर्वपुष्पफलोपगैः ॥ ६ ॥

वृतां पुष्करिणीभिश्च नानापुष्पोपशोभिताम् ।
सदामदैश्च विहगैर्विचित्रां परमाद्भुतैः ॥ ७ ॥

ईहामृगैश्च विविधैर्जुष्टां दृष्टिमनोहरैः ।
वीथीः संप्रेक्षमाणश्च मणिकाञ्चनतोरणाः ॥८॥

नानामृगगणाकीर्णां फलैः प्रपतितैर्वृताम् ।
अशोकवनिकामेव प्राविशत्सन्ततद्रुमाम् ॥ ९ ॥

अङ्गनाशतमात्रं तु तं व्रजन्तमनुव्रजत् ।
महेन्द्रमिव पौलस्त्यं देवगन्धर्वयोषितः ॥१०॥

दीपिकाः काञ्चनीः काश्चिज्जगृहुस्तत्र योषितः ।
वालव्यजनहस्ताश्च तालवृन्तानि चापराः ॥

काञ्चनैरपि भृङ्गारैर्जह्रुः सलिलमग्रतः ।
मण्डलाग्रानसींश्चैव गृह्यान्याः पृष्ठतो ययुः ॥

काचिद्रत्नमयीं पात्रीं पूर्णां पानस्य भामिनी ।
दक्षिणा दक्षिणेनैका तदा जग्राह पाणिना ॥

राजहंसप्रतीकाशं छत्रं पूर्णशशिप्रभम् ।
सौवर्णदण्डमपरा गृहीत्वा पृष्ठतो ययौ ॥१४॥

निद्रामदपरीताक्ष्यो रावणस्योत्तमाः स्त्रियः ।
अनुजग्मुः पतिं वीरं घनं विद्युल्लता इव ॥१५॥

व्याविद्धहारकेयूराः समामृदितवर्णकाः ।
समागलितकेशान्ताः सस्वेदवदनास्तथा ॥

घूर्णन्त्यो मदशेषेण निद्रया च शुभाननाः ।
स्वेदक्लिष्टाङ्गकुसुमाः सुमाल्याकुलमूर्धजाः ॥

प्रयान्तं नैर्ऋतपतिं नार्यो मदिरलोचनाः ।
बहुमानाच्च कामाच्च प्रिया भार्यास्तमन्वयुः ॥

स च कामपराधीनः पतिस्तासां महाबलः ।
सीतासक्तमना मन्दो मदाञ्चितगतिर्बभौ ॥

ततः काञ्चीनिनादं च नूपुराणां च निःस्वनम् ।
शुश्राव परमस्त्रीणां स कपिर्मारुतात्मजः ॥

तं चाप्रतिमकर्माणमचिन्त्यबलपौरुषम् ।
द्वारदेशमनुप्राप्तं ददर्श हनुमान्कपिः ॥ २१ ॥

दीपिकाभिरनेकाभिः समन्तादवभासितम् ।
गन्धतैलावसिक्ताभिर्ध्रियमाणाभिरग्रतः ॥

कामदर्पमदैर्युक्तं जिह्मताम्रायतेक्षणम् ।
समक्षमिव कंदर्पमपविद्धशरासनम् ॥ २३ ॥

B VI 9

अपिताप्तफेनाभवरजो वस्तमुत्तमम् ।
सलीलमनुकर्षन्त विमुक्त सक्तमङ्गदे ॥ २४ ॥

तं पत्रविटपे लीनः पत्रपुष्पघनावृतः ।
समीपमुपसङ्क्रान्तं निध्यातुमुपचक्रमे ॥ २५ ॥

अवेक्षमाणस्तु ततो ददर्श कपिकुञ्जरः
रूपयौवनसम्पन्ना रावणस्य वरस्त्रियः । २६ ॥

ताभिः परिवृतो राजा सुरूपाभिर्महायशाः ।
तन्मृगद्विजसंघुष्टं प्रविष्टः प्रमदावनम् ॥ २७ ॥

क्षीबो विचित्राभरणः शङ्कुकर्णो महाबलः ।
तेन विश्रवसः पुत्रः स दृष्टो राक्षसाधिपः ।

वृतः परमनारीभिस्ताराभिरिव चन्द्रमा
तं ददर्श महातेजास्तेजोवन्तं महाकपिः । २९ ।

रावणोऽयं महाबाहुरिति संचिन्त्य वानरः ।
अवप्लुतो महातेजा हनुमान्मारुतात्मजः ॥ ३० ॥

स तथाप्युग्रतेजाः सन्निर्धूतस्तस्य तेजसा ।
पत्रगुह्यान्तरे सक्तो हनुमान्संवृतोऽभवत् ॥

सीतामसितकेशान्तां सुश्रोणीं संहतस्तनीम् ।
दिदृक्षुरसितापाङ्गामुपावर्तत रावणः ॥ ३२ ॥

इति अष्टादशः सर्गः ॥



## एकोनविंशः सर्गः ॥



तस्मिन्नेव ततः काले राजपुत्री त्वनिन्दिता ।
रूपयौवनसंपन्नं भूषणोत्तमभूषितम् ॥ १ ॥

ततो दृष्ट्वैव वैदेही रावणं राक्षसाधिपम् ।
प्रावेपत वरारोहा प्रवाते कदली यथा ॥ २ ॥

आच्छाद्योदरमूरुभ्यां बाहुभ्यां च पयोधरौ ।
उपविष्टां विशालाक्षीं रुदन्तीं वरवर्णिनीम् ॥

दशग्रीवस्तु वैदेहीं रक्षितां राक्षसीगणैः ।
ददर्श सीतां दुःखार्तां नावं सन्नामिवार्णवे ॥

असंवृतायामासीनां धरण्यां संशितव्रताम् ।
छिन्नां प्रपतितां भूमौ शाखामिव वनस्पतेः ।

मलमण्डनदिग्धाङ्गीं मण्डनार्हाममण्डिताम् ।
मृणाली पङ्कदिग्धेव विभाति न विभाति च ॥

समीपं राजसिंहस्य रामस्य विदितात्मनः ।
संकल्पहयसंयुक्तैर्यान्तीमिव मनोरथैः ॥ ७ ॥

शुष्यन्तीं रुदतीमेकां ध्यानशोकपरायणाम् ।
दुःखस्यान्तमपश्यन्तीं रामां राममनुव्रताम् ।

वेष्टमानां तथाविष्टां पन्नगेन्द्रवधूमिव ।
धूप्यमानां ग्रहेणेव रोहिणीं धूमकेतुना ॥ ९ ॥

वृत्तशीलकुले जातामाचारवति धार्मिके
पुनः संस्कारमापन्नां जातामिव च दुष्कुले ॥

अभूतेनापवादेन कीर्तिं निपतितामिव
आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥

सन्नामिव महाकीर्तिं श्रद्धामिव विमानिताम्
पूजामिव परिक्षीणामाशां प्रतिहतामिव ॥ १२

आयतीमिव विध्वस्तामाज्ञां प्रतिहतामिव ॥
दीप्तामिव दिशं काले पूजामपहृतामिव ॥१३॥

पद्मिनीमिव विध्वस्तां हतशूरां चमूमिव ।
प्रभामिव तमोध्वस्तामुपक्षीणामिवापगाम् ॥

वेदीमिव परामृष्टां शान्तामग्निशिखामिव ।
पौर्णमासीमिव निशां राहुग्रस्तेन्दुमण्डलाम् ॥

उत्कृष्टपर्णकमलां वित्रासितविहंगमाम् ।
हस्तिहस्तपरामृष्टामाकुलां पद्मिनीमिव । १६ ॥

पतिशोकातुरां शुष्कां नदीं विस्रावितामिव ।
परया मृजया हीनां कृष्णपक्षनिशामिव ॥ १७ ॥

सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम् ।
तप्यमानामिवोष्णेन मृणालीमचिरोद्धृताम् ॥

गृहीतामायतां स्तम्भे यूथपेन विनाकृताम् ।
निःश्वसन्तीं सुदुःखार्तां गजराजवधूमिव ॥

एकया दीर्घया वेण्या शोभमानामयत्नतः ।
नीलया नीरदापाये वनराज्या महीमिव ॥

उपवासेन शोकेन ध्यानेन च भयेन च ।
परिक्षीणां कृशां दीनामल्पाहारां तपोधनाम् ॥

आयाचमानां दुःखार्तां प्राञ्जलिं देवतामिव ।
भावेन रघुमुख्यस्य दशग्रीवपराभवम् ॥ २२

समीक्षमाणं रुदतीमनिन्दितां
सुपक्ष्मताम्रायतशुक्ललोचनाम् ।
अनुव्रतां रामपतीव मैथिलीं
प्रलोभयामास वधाय रावणः ॥ २३ ।

इति एकोनविंशः सर्गः ॥

—*—

विंशः सर्गः ।

---

स तां पतिव्रतां दीनां निरानन्दां तपस्विनीम् ।
साकारैर्मधुरैर्वाक्यैर्न्यदर्शयत रावणः ॥ १ ॥

मां दृष्ट्वा नागनासोरु गूहमाना स्तनोदरम् ।
अदर्शनमिवात्मानं भयान्नेतु त्वमिच्छसि ॥

कामये त्वां विशालाक्षि बहु मन्यस्व मां प्रिये ।
सर्वाङ्गगुणसंपन्ने सर्वलोकमनोहरे ॥ ३ ॥

नेह केचिन्मनुष्या वा राक्षसाः कामरूपिणः ।
व्यपसर्पतु ते सीते भयं मत्तः समुत्थितम् ॥४॥

स्वधर्मो रक्षसां भीरु सर्वथैव न संशयः ।
गमनं वा परस्त्रीणां हरणं संप्रमथ्य वा ॥ ५ ॥

एवं चैतदकामां तु न त्वां स्प्रक्ष्यामि मैथिलि ।
कामं कामः शरीरे मे यथाकामं प्रवर्तताम् ॥

देवि नेह भयं कार्यं मयि विश्वसिहि प्रिये ।
प्रणयस्व च तत्त्वेन मैवं भूः शोकलालसा ॥

एकवेणी धराशय्या ध्यानं मलिनमम्बरम् ।
अस्थानेऽप्युपवासश्च नैतान्यौपयिकानि ते ॥

विचित्राणि च माल्यानि चन्दनान्यगुरूणि च ।
विविधानि च वासांसि दिव्यान्याभरणानि च ॥

महार्हाणि च पानानि शयनान्यासनानि च ।
गीतं नृत्तं च वाद्यं च लभ मां प्राप्य मैथिलि ॥

स्त्रीरत्नमसि मैवं भूः कुरु गात्रेषु भूषणम् ।
मां प्राप्य हि कथं नु स्यास्त्वमनर्हा सुविग्रहे ॥

इदं ते चारु संजातं यौवनं व्यतिवर्तते ।
यदतीतं पुनर्नैति स्रोतः शीघ्रमपामिव ॥ १२ ॥

त्वां कृत्वोपरतो मन्ये रूपकर्ता स विश्वसृट् ।
न हि रूपोपमा त्वन्या तवास्ति शुभदर्शने ॥

त्वां समासाद्य वैदेहि रूपयौवनशालिनीम् ।
कः पुमानतिवर्तेत साक्षादपि पितामहः ॥ १४ ॥

यद्यत्पश्यामि ते गात्रं शीतांशुसदृशानने ।
तस्मिंस्तस्मिन्पृथुश्रोणि चक्षुर्मम निबध्यते ॥

भव मैथिलि भार्या मे मोहमेनं विसर्जय ।
बह्वीनामुत्तमस्त्रीणामाहृतानामितस्ततः ॥ १६ ॥

सर्वासामेव भद्रं ते ममाग्रमहिषी भव
लोकेभ्यो यानि रत्नानि संप्रमथ्याहृतानि वै ॥

तानि मे भीरु सर्वाणि राज्यं चैतदहं च ते ।
विजित्य पृथिवीं सर्वां नानानगरमालिनीम् ॥

जनकाय प्रदास्यामि तव हेतोर्विलासिनि ।
नेह पश्यामि लोकेऽन्यं यो मे प्रतिबलो भवेत् ॥

पश्य मे सुमहद्वीर्यमप्रतिद्वन्द्वमाहवे
असकृत्संयुगे भग्ना मया विमृदितध्वजाः ॥

अशक्ताः प्रत्यनीकेषु स्थातुं मम सुरासुराः ।
इच्छया क्रियतामद्य प्रतिकर्म तवोत्तमम् ॥

सप्रभाण्यवसज्यन्तां तवाङ्गे भूषणानि च ।
साधु पश्यामि ते रूपं संयुक्तं प्रतिकर्मणा ॥

प्रतिकर्माभिसंयुक्ता दाक्षिण्येन वरानने ।
भुङ्क्ष्व भोगान्यथाकामं पिब भीरु रमस्व च ॥

यथेष्टं च प्रयच्छ त्वं पृथिवीं वा धनानि च ।
रमस्व मयि विस्रब्धा धृष्टमाज्ञापयस्व च ।

मत्प्रसादाल्ललन्त्याश्च ललन्तां बान्धवास्तव च ।
ऋद्धिं ममानुपश्य त्वं श्रियं भद्रे यशश्च मे ॥

किं करिष्यसि रामेण सुभगे चीरवाससा ।
निक्षिप्तविजयो रामो गतश्रीर्वनगोचरः ॥

व्रती स्थण्डिलशायी च शङ्के जीवति वा न वा ।
न हि वैदेहि रामस्त्वां द्रष्टुं वाप्युपलप्स्यते ।

पुरोवातावेरसितैर्मेघैर्ज्योत्स्नामिवावृताम् ।
न चापि मम हस्तात्त्वां प्राप्तुमर्हति राघवः ।

हिरण्यकशिपुः कीर्तिमिन्द्रहस्तगतामिव ।
चारुस्मिते चारुदति चारुनेत्रे विलासिनि ॥

मनो हरसि मे भीरु सुपर्णः पन्नगं यथा ।
क्लिष्टकौशेयवसनां तन्वीमप्यनलंकृताम् ॥३०॥
त्वां दृष्ट्वा स्वेषु दारेषु रतिं नोपलभाम्यहम् ।
अन्तःपुरनिवासिन्यः स्त्रियः सर्वगुणान्विताः ।
यावन्त्यो मम सर्वासामैश्वर्यं कुरु जानकि ।
मम ह्यसितकेशान्ते त्रैलोक्यप्रवराः स्त्रियः ॥

तास्त्वां परिचरिष्यन्ति श्रियमप्सरसो यथा ।
यानि वैश्रवणे सुभ्रु रत्नानि च धनानि च ॥
तानि लोकांश्च सुश्रोणि मां च भुङ्क्ष्व यथासुखम्
न रामस्तपसा देवि न बलेन न विक्रमैः ।
न धनेन मया तुल्यस्तेजसा यशसापि वा ॥

पिब विहर रमस्व भुङ्क्ष्व भोगा-
न्धननिचयं प्रदिशामि मेदिनीं च ।

मयि कृत कञ्चने यथासुखं त्वं
मयि च समेत्य रमन्तु बान्धवास्ते ॥

कुसुमिततरुजालसंततानि
भ्रमरयुतानि समुद्रतीरजानि ।
कनकविमलहारभूषिताङ्गि
विहर मया सह भीरु काननानि ॥

इति विंश सर्गः ॥

--*--

## एकविंशः सर्गः ॥

-*-

तस्य तद्वचन श्रुत्वा सीता रौद्रस्य रक्षसः ।
आर्ता दीनस्वरा दीन प्रत्युवाच शनैर्वचः ॥

दुःखार्ता रुदती सीता वेपमाना तपस्विनी ।
चिन्तयन्ती वरारोहा पतिमेव पतिव्रता ॥ २ ॥

तृणमन्तरतः कृत्वा प्रत्युवाच शुचिस्मिता ।
निवर्तय मनो मत्तः स्वजने क्रियतां मनः ॥

न मां प्रार्थयितुं युक्तं सुसिद्धिमिव पापकृत् ।
अकार्यं न मया कार्यमेकपत्न्या विगर्हितम् ॥

कुलं संप्राप्तया पुण्यं कुले महति जातया ।
एवमुक्त्वा तु वैदेही रावणं तं यशस्विनी ॥

राक्षसं पृष्ठतः कृत्वा भूयो वचनमब्रवीत् ।
नाहमौपयिकी भार्या परभार्या सती तव ॥

साधु धर्ममवेक्षस्व साधु साधुव्रतं चर ।
यथा तव तथान्येषां दारा रक्ष्या निशाचर ॥

आत्मानमुपमां कृत्वा स्वेषु दारेषु रम्यताम् ।
अतुष्टं स्वेषु दारेषु चपलं चलितेन्द्रियम् ॥ ८ ॥

नयन्ति निकृतिप्रज्ञं परदाराः पराभवम् ।
इह सन्तो न वा सन्ति सतो वा नानुवर्तसे ॥

तथा हि विपरीता ते बुद्धिराचारवर्जिता ।
वचो मिथ्याप्रणीतात्मा पथ्यमुक्तं विचक्षणैः ॥

राक्षसानामभावाय त्वं वा न प्रतिपद्यसे ।
अकृतात्मानमासाद्य राजानमनये रतम् ॥

समृद्धानि विनश्यन्ति राष्ट्राणि नगराणि च ।
तथेयं त्वां समासाद्य लङ्का रत्नौघसंकुला ॥

अपराधात्तवैकस्य न चिराद्विनशिष्यति ।
स्वकृतैर्हन्यमानस्य रावणादीर्घदर्शिनः ॥१३॥

अभिनन्दन्ति भूतानि विनाशे पापकर्मणः ।
एवं त्वां पापकर्माणं वक्ष्यन्ति निकृता जनाः ॥

दिष्ट्यैतद्व्यसनं प्राप्तो रौद्र इत्येव हर्षिताः ।
शक्या लोभयितुं नाहमैश्वर्येण धनेन वा ॥

अनन्या राघवेणाहं भास्करेण प्रभा यथा ।
उपधाय भुजं तस्य लोकनाथस्य सत्कृतम् ॥

कथं नामोपधास्यामि भुजमन्यस्य कस्यचित् ।
अहमौपयिकी भार्या तस्यैव वसुधापतेः ॥१७॥

व्रतस्नातस्य धीरस्य विद्येव विदितात्मनः ।
साधु रावण रामेण मां समानय दुःखिताम् ॥

वने वाशितया सार्धं करेण्वेव गजाधिपम् ।
मित्रमौपयिकं कर्तुं रामः स्थानं परीप्सता ॥

वधं चानिच्छता घोरं त्वयासौ पुरुषर्षभः ।
विदितः स हि धर्मात्मा शरणागतवत्सलः ॥

तेन मैत्री भवतु ते यदि जीवितुमिच्छसि
प्रसादयस्व त्वं चैनं शरणागतवत्सलम् ॥

मां चास्मै प्रयतो भूत्वा निर्यातयितुमर्हसि ।
एवं हि ते भवेत्स्वस्ति मत्प्रदाय रघूत्तमे ॥

अन्यथा त्वं हि कुर्वाणो वधं प्राप्स्यसि रावण ।
वर्जयेद्वज्रमुत्सृष्टं वर्जयेदन्तकश्चिरम् ॥ २६ ॥

त्वद्विधं तु न संक्रुद्धो लोकनाथः स राघवः ।
रामस्य धनुषः शब्दं श्रोष्यसि त्वं महास्वनम् ॥

शतक्रतुविसृष्टस्य निर्घोषमशनेरिव ।
इह शीघ्रं सुपर्वाणो ज्वलितास्या इवोरगाः ॥

इषवो निपतिष्यन्ति रामलक्ष्मणलक्षणाः ।
रक्षांसि परिनिघ्नन्तः पुर्यामस्यां समन्ततः ॥

असंपातं करिष्यन्ति पतन्तः कङ्कवाससः ।
राक्षसेन्द्रमहासर्पान्स रामगरुडो महान् ॥२७॥

उद्धरिष्यति वेगेन वैनतेय इवोरगान् ।
अपनेष्यति मां भर्ता त्वत्तः शीघ्रमरिंदमः ॥

असुरेभ्यः श्रियं दीप्तां विष्णुस्त्रिभिरिव क्रमैः ।
जनस्थाने हतस्थाने निहते रक्षसां बले ॥२९॥

अशक्तेन त्वया रक्ष कृतमेतदसाधु वै ।
आश्रमं तु तयोः शून्यं प्रविश्य नरसिंहयोः ॥

गोचरं गतयोर्भ्रात्रोरपनीता त्वयाधम ।
न हि गन्धमुपाघ्राय रामलक्ष्मणयोस्त्वया ॥

शक्यं सन्दर्शने स्थातुं शुना शार्दूलयोरिव ।
तस्य ते विग्रहे ताभ्यां युगग्रहणमस्थिरम् ॥

वृत्रस्येवेन्द्रबाहुभ्यां बाहोरेकस्य निग्रहः ।
क्षिप्रं तव स नाथो मे रामः सौमित्रिणा सह ।
तोयमल्पमिवादित्यः प्राणानादास्यते शरैः ॥

गिरिं कुबेरस्य गतोऽथ वालयं
सभां गतो वा वरुणस्य राज्ञः ।

असंशयं दाशरथेर्न मोक्ष्यसे
महाद्रुमः कालहतोऽशनेरिव ॥ ३४ ॥

इति एकविंशः सर्गः ॥



## द्वाविंशः सर्गः ॥



सीताया वचनं श्रुत्वा परुषं राक्षसाधिपः ।
प्रत्युवाच ततः सीतां विप्रियं प्रियदर्शनाम् ॥

यथा यथा सान्त्वयिता वश्यः स्त्रीणां तथा तथा ।
यथा यथा प्रियं वक्ता परिभूतस्तथा तथा ॥

संनियच्छति मे क्रोधं त्वयि कामः समुत्थितः ।
द्रवतो मार्गमासाद्य हयानिव सुसारथिः ॥

वामः कामो मनुष्याणां यस्मिन्किल निबध्यते ।
जने तस्मिंस्त्वनुक्रोशः स्नेहश्च किल जायते ॥

एतस्मात्कारणान्न त्वां घातयामि वरानने ।
वधार्हामवमानार्हां मिथ्याप्रव्रजिते रताम् ॥

परुषाणीह वाक्यानि यानि यानि ब्रवीषि माम् ।
तेषु तेषु वधो युक्तस्तव मैथिलि दारुणः ॥

एवमुक्त्वा तु वैदेहीं रावणो राक्षसाधिपः ।
क्रोधसंरम्भसंयुक्तः सीतामुत्तरमब्रवीत् ॥ ७ ॥

द्वौ मासौ रक्षितव्यौ मे योऽवधिस्ते मया कृतः ।
तत  शयनमारोह मम त्व वरवर्णिनि ॥ ८ ॥

द्वाभ्यामूर्ध्वं तु मासाभ्यां भर्तारं मामनिच्छतीम् ।
मम त्वां प्रातराशार्थमालभन्ते महानसे ॥ ९ ॥

तां तर्ज्यमानां सम्प्रेक्ष्य राक्षसेन्द्रेण जानकीम् ।
देवगन्धर्वकन्यास्ता विषेदुर्विपुलेक्षणाः ॥ १० ॥

ओष्ठप्रकारैरपरा वक्त्रैर्नेत्रैस्तथापराः ।
सीतामाश्वासयामासुस्तर्जितां तेन रक्षसा ॥

ताभिराश्वासिता सीता रावणं राक्षसाधिपम्
उवाचात्महितं वाक्यं वृत्तशौण्डीर्यगर्वितम् ॥

नूनं न ते जनः कश्चिदस्ति निःश्रेयसे स्थितः ।
निवारयति यो न त्वां कर्मणोऽस्माद्विगर्हितात् ॥

मां हि धर्मात्मनः पत्नीं शचीमिव शचीपतेः ।
त्वदन्यस्त्रिषु लोकेषु प्रार्थयेन्मनसापि कः ॥

राक्षसाधम रामस्य भार्याममिततेजसः ।
उक्तवानसि यत्पापं क्व गतस्तस्य मोक्ष्यसे ॥

यथा दृप्तश्च मातङ्गः शशश्च सहितो वने ।
तथा द्विरदवद्रामस्त्वं नीच शशवत्स्मृतः ॥१६

स त्वमिक्ष्वाकुनाथं वै क्षिपन्निह न लज्जसे ।
चक्षुषोर्विषयं तस्य न तावदुपगच्छसि ॥१७

इमे ते नयने क्रूरे विरूपे कृष्णपिङ्गले ।
क्षितौ न पतिते कस्मान्मामनार्य निरीक्षतः ।

तस्य धर्मात्मनः पत्नीं स्नुषां दशरथस्य च ।
कथं व्याहरतो मां ते जिह्वा पाप न शीर्यते ।

असंदेशात्तु रामस्य तपसश्चानुपालनात् ।
न त्वां कुर्मि दशग्रीव भस्म भस्मार्हतेजसा ॥

नापहर्तुमहं शक्या तस्य रामस्य धीमतः ।
विधिस्तव वधार्थाय विहितो नात्र संशयः ॥

शूरेण धनदभ्रात्रा बलैः समुदितेन च
अपोह्य राम कस्माद्धि दारचौर्यं त्वया कृतम् ॥

सीताया वचनं श्रुत्वा रावणो राक्षसाधिपः।
विवृत्य नयने क्रूरे जानकीमन्ववैक्षत ॥ २३ ॥

नीलजीमूतसंकाशो महाभुजशिरोधरः।
सिंहसत्त्वगतिः श्रीमान्दीप्तजिह्वाग्रलोचनः।

चलाग्रमुकुटप्रांशुश्चित्रमाल्यानुलेपनः।
रक्तमाल्याम्बरधरस्तप्ताङ्गदविभूषणः ॥ २५ ॥

श्रोणीसूत्रेण महता मेचकेन सुसंवृतः।
अमृतोत्पादनद्धेन भुजगेनेव मन्दरः ॥ २६ ॥

द्वाभ्यां स परिपूर्णाभ्यां भुजाभ्यां राक्षसेश्वरः।
शुशुभेऽचलसंकाशः शृङ्गाभ्यामिव मन्दरः ॥

तरुणादित्यवर्णाभ्यां कुण्डलाभ्यां विभूषितः।
रक्तपल्लवपुष्पाभ्यामशोकाभ्यामिवाचलः ॥

स कल्पवृक्षप्रतिमो वसन्त इव मूर्तिमान्।
श्मशानचैत्यप्रतिमो भूषितोऽपि भयंकरः ॥

अवेक्षमाणो वैदेहीं कोपसंरक्तलोचन ।
उवाच रावणः सीतां भुजंग इव निःश्वसन्

अनयेनाभिसंपन्नमर्थहीनमनुव्रते
नाशयाम्यहमद्य त्वां सूर्यः संध्यामिवौजसा

इत्युक्त्वा मैथिलीं राजा रावण शत्रुरावणः
संदिदेश ततः सर्वा राक्षसीर्घोरदर्शनाः ॥

एकाक्षीमेककर्णां च कर्णप्रावरणां तथा ।
गोकर्णीं हस्तिकर्णीं च लम्बकर्णीमकर्णिकाम्

हस्तिपाद्यश्वपाद्यौ च गोपादीं पादचूलिकाम्
एकाक्षीमेकपादीं च पृथुपादीमपादिकाम् ॥

अतिमात्रशिरोग्रीवामतिमात्रकुचोदरीम् ।
अतिमात्रास्यनेत्रां च दीर्घजिह्वामजिह्विकाम् ॥

अनासिकां सिंहमुखीं गोमुखीं सूकरीमुखीम्
यथा मद्वशगा सीता क्षिप्रं भवति जानकी ॥

तथा कुरुत राक्षस्यः सर्वाः क्षिप्रं समेत्य च
प्रतिलोमानुकूलैश्च सामदानादिभेदनैः ॥३७॥

आवर्जयत वैदेहीं द्रव्यस्योपनयेन च ।
इति प्रतिसमादिश्य राक्षसेन्द्रः पुनः पुनः ॥
काममन्युपरीतात्मा जानकीं पर्यतर्जयत् ।
उपगम्य ततः क्षिप्रं राक्षसी धान्यमालिनी ॥
परिष्वज्य दशग्रीवमिदं वचनमब्रवीत् ।
मया क्रीड महाराज सीतया किं तवानया ।
विवर्णया कृपणया मानुष्या राक्षसेश्वर ।
नूनमस्या महाराज न दिव्यान्भोगसत्तमान् ॥
विदधात्यमरश्रेष्ठस्तव बाहुबलार्जितान् ।
अकामां कामयानस्य शरीरमुपतप्यते ॥ ४४ ॥
इच्छन्तीं कामयानस्य प्रीतिर्भवति शोभना ।
एवमुक्तस्तु राक्षस्या समुत्क्षिप्तस्ततो बली ॥
प्रहसन्मेघसंकाशो राक्षसः स न्यवर्तत ।
प्रस्थितः स दशग्रीवः कम्पयन्निव मेदिनीम् ॥
ज्वलद्भास्करवर्णाभं प्रविवेश निवेशनम् ।
देवगन्धर्वकन्याश्च नागकन्याश्च सर्वतः ।
परिवार्य दशग्रीवं विविशुस्तद्गृहोत्तमम् ॥ ४५ ॥

स मैथिलीं धर्मपरामवस्थितां
प्रवेपमानां परिभर्त्स्य रावणः ।
विहाय सीतां मदनेन मोहितः
स्वमेव वेश्म प्रविवेश भास्वरम् ॥ ४६ ।

इति द्वाविंशः सर्गः ॥

---

## त्रयोविंशः सर्गः ।

---

इत्युक्त्वा मैथिलीं राजा रावणः शत्रुरावणः
संदिश्य च ततः सर्वा राक्षसीर्निर्जगाम ह ॥

निष्क्रान्ते राक्षसेन्द्रे तु पुनरन्तःपुरं गते ।
राक्षस्यो भीमरूपास्ताः सीतां समभिदुद्रुवुः ।

ततः सीतामुपागम्य राक्षस्यः क्रोधमूर्छिताः ।
परं परुषया वाचा वैदेहीमिदमब्रुवन् ॥ ३ ॥

पौलस्त्यस्य वरिष्ठस्य रावणस्य महात्मनः ।
दशग्रीवस्य भार्यात्वं सीते न बहुमन्यसे । ४॥

ततस्त्वेकजटा नाम राक्षसी वाक्यमब्रवीत् ।
आमन्त्र्य क्रोधताम्राक्षी सीतां करतलोदरीम् ॥

प्रजापतीनां षण्णां तु चतुर्थो यः प्रजापतिः ।
मानसो ब्रह्मणः पुत्रः पुलस्त्य इति विश्रुतः ॥

पुलस्त्यस्य तु तेजस्वी महर्षिर्मानसः सुतः ।
नाम्ना स विश्रवा नाम प्रजापतिसमप्रभः ॥

तस्य पुत्रो विशालाक्षि रावणः शत्रुरावणः ।
तस्य त्वं राक्षसेन्द्रस्य भार्या भवितुमर्हसि ॥

मयोक्तं चारुसर्वाङ्गि वाक्यं किं नानुमन्यसे ।
ततो हरिजटा नाम राक्षसी वाक्यमब्रवीत् ।

विवृत्य नयने कोपान्मार्जारसदृशेक्षणा ।
येन देवास्त्रयस्त्रिंशद्देवराजश्च निर्जिताः ॥१०॥

तस्य त्वं राक्षसेन्द्रस्य भार्या भवितुमर्हसि ।
ततस्तु प्रघसा नाम राक्षसी क्रोधमूर्छिता ॥

भर्त्सयन्ती तदा घोरमिदं वचनमब्रवीत् ।
वीर्योत्सिक्तस्य शूरस्य सङ्ग्रामेष्वनिवर्तिनः ॥

बलिनो वीर्ययुक्तस्य भार्यात्वं किं न लिप्ससे
प्रियां बहुमतां भार्यां त्यक्त्वा राजा महाबलः ।

सर्वासां च महाभागां त्वामुपैष्यति रावणः ।
समृद्धं स्त्रीसहस्रेण नानारत्नोपशोभितम् ॥

अन्तःपुरं समुत्सृज्य त्वामुपैष्यति रावणः ।
अन्या तु विकटा नाम राक्षसी वाक्यमब्रवीत् ॥

असकृद्देवता युद्धे नागगन्धर्वदानवाः ।
निर्जिताः समरे येन स ते पार्श्वमुपागतः ॥

तस्य सर्वसमृद्धस्य रावणस्य महात्मनः ।
किमद्य राक्षसेन्द्रस्य भार्या त्वं नेच्छसेऽधमे ॥

ततस्तु दुर्मुखी नाम राक्षसी वाक्यमब्रवीत् ।
यस्य सूर्यो न तपति भीतो यस्य च मारुतः ॥

न वाति स्मायतापाङ्गे किं त्वं तस्य न तिष्ठसि ।
पुष्पवृष्टिं च तरवो मुमुचुर्यस्य वै भयात् ॥

शैलाश्च सुभ्रूः पानीयं जलदाश्च यदेच्छति ।
तस्य नैरृतराजस्य राजराजस्य भामिनि ॥

किं त्वं न कुरुषे बुद्धिं भार्यार्थे रावणस्य हि ।
साधु ते तत्त्वतो देवि कथितं साधु भामिनि ।
गृहाण सुस्मिते वाक्यमन्यथा न भविष्यसि ॥

इति त्रयोविंश सर्गः ॥



## चतुर्विंशः सर्गः

ततः सीतां समस्तास्ता राक्षस्यो विकृताननाः ।
परुषं परुषा नार्य ऊचुस्तां वाक्यमप्रियम् ॥

किं त्वमन्तःपुरे सीते सर्वभूतमनोहरे ।
महार्हशयनोपेते न वासमनुमन्यसे ॥ २ ॥

मानुषी मानुषस्यैव भार्यात्वं बहु मन्यसे ।
प्रत्याहर मनो रामान्न त्वं जातु भविष्यसि ॥

त्रैलोक्यवसुभोक्तारं रावणं राक्षसेश्वरम् ।
भर्तारमुपसंगम्य विहरस्व यथासुखम् ॥ ४ ॥

मानुषी मानुषं तं तु राममिच्छसि शोभने ।
राज्याद्भ्रष्टमसिद्धार्थं विक्लवं त्वमनिन्दिते ॥५

राक्षसीनां वचः श्रुत्वा सीता पद्मनिभेक्षणा
नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत् ॥ ६

यदिदं लोकविद्विष्टमुदाहरथ सङ्गताः ।
नैतन्मनसि वाक्यं मे किल्बिषं प्रतिभाति वः

न मानुषी राक्षसस्य भार्या भवितुमर्हति ।
कामं खादत मां सर्वा न करिष्यामि वो वचः

दीनो वा राज्यहीनो वा यो मे भर्ता स मे गुरुः
तं नित्यमनुरक्तास्मि यथा सूर्यं सुवर्चला ॥

यथा शची महाभागा शक्रं समुपतिष्ठति ।
अरुन्धती वसिष्ठं च रोहिणी शशिनं यथा ॥

लोपामुद्रा यथागस्त्यं सुकन्या च्यवनं यथा ।
सावित्री सत्यवन्तं च कपिलं श्रीमती यथा ॥

सौदासं मदयन्तीव केशिनी सगरं यथा ।
नैषधं दमयन्तीव भैमी पतिमनुव्रता ॥ १२ ॥

तथाऽहमिक्ष्वाकुवरं रामं पतिमनुव्रता ।
सीताया वचनं श्रुत्वा राक्षस्यः क्रोधमूर्छिताः ॥

भर्त्सयन्ति स्म परुषैर्वाक्यै रावणचोदिताः ।
अवलीनः स निर्वाक्यो हनुमाञ्छिंशपाद्रुमे ॥

सीतां संतर्जयन्तीस्ता राक्षसीरशृणोत्कपिः ।
तामभिक्रम्य संक्रुद्धा वेपमानां समन्ततः ॥

भृशं संलिलिहुर्दीप्तान्प्रलम्बान्दशनच्छदान् ।
ऊचुश्च परमक्रुद्धाः प्रगृह्याशु परश्वधान् ॥

नेयमर्हति भर्तारं रावणं राक्षसाधिपम् ।
संभर्त्स्यमाना भीमाभी राक्षसीभिर्वरानना ॥

सा बाष्पमपमार्जन्ती शिंशपां तामुपागमत् ।
ततस्तां शिंशपां सीता राक्षसीभिः समावृता ॥

अभिगम्य विशालाक्षी तस्थौ शोकपरिप्लुता ।
तां कृशां दीनवदनां मलिनाम्बरवासिनीम् ॥

भर्त्सयांचक्रिरे सीतां राक्षस्यस्तां समन्ततः ।
ततस्तां विनता नाम राक्षसी भीमदर्शना ॥

अथाब्रवीत्कुपिताकारा कराला निर्णतोदरी ।
सीते पर्याप्तमेतावद्भर्तुः स्नेहो निदर्शितः ॥

सर्वत्रातिकृतं भद्रे व्यसनायोपकल्पते ।
परितुष्टास्मि भद्रं ते मानुषस्ते कृतो विधिः ॥

ममापि तु वचः पथ्यं ब्रुवन्त्याः कुरु मैथिलि ।
रावणं भज भर्तारं भर्तारं सर्वरक्षसाम् ॥

विक्रान्तं रूपवन्तं च सुरेशमिव वासवम् ।
दक्षिणं त्यागशीलं च सर्वस्य प्रियदर्शनम् ॥

मानुषं कृपणं रामं त्यक्त्वा रावणमाश्रय ।
दिव्याङ्गरागा वैदेहि दिव्याभरणभूषिता ।

अद्यप्रभृति सर्वेषां लोकानामीश्वरी भव ।
अग्नेः स्वाहा यथा देवी शचीवेन्द्रस्य शोभने ॥

किं ते रामेण वैदेहि कृपणेन गतायुषा ।
एतदुक्तं च मे वाक्यं यदि त्वं न करिष्यसि ॥

अस्मिन्मुहूर्ते सर्वास्त्वां भक्षयिष्यामहे वयम् ।
अन्या तु विकटा नाम लम्बमानपयोधरा ॥

अब्रवीत्कुपिता सीतां मुष्टिमुद्यम्य गर्जती ।
बहून्यप्रियरूपाणि वचनानि सुदुर्मते ॥ २९ ॥

अनुक्रोशान्मृदुत्वाच्च सोढानि तव मैथिलि
न च नः कुरुषे वाक्यं हितं कालपुरःसरम् ॥

आनीतासि समुद्रस्य पारमन्यैर्दुरासदम् ।
रावणान्तःपुरं घोरं प्रविष्टा चासि मैथिलि ॥

रावणस्य गृहे रुद्धामस्माभिस्तु सुरक्षिताम् ।
न त्वां शक्तः परित्रातुमपि साक्षात्पुरंदरः ॥

कुरुष्व हितवादिन्या वचनं मम मैथिलि ।
अलमश्रुप्रपातेन त्यज शोकमनर्थकम् ॥ ३३ ॥

भज प्रीतिं प्रहर्षं च त्यजैतां नित्यदैन्यताम् ।
सीते राक्षसराजेन सह क्रीड यथासुखम् ॥

जानासि हि यथा भीरु स्त्रीणां यौवनमध्रुवम् ।
यावन्न ते व्यतिक्रामेत्तावत्सुखमवाप्नुहि ॥

उद्यानानि च रम्याणि पर्वतोपवनानि च ।
सह राक्षसराजेन चर त्वं मदिरेक्षणे ॥ [illegible] ॥

स्त्रीसहस्राणि ते सप्त वशे स्थास्यन्ति सुन्दरि
रावणं भज भर्तारं भर्तारं सर्वरक्षसाम् ।

उत्पाट्य वा ते हृदयं भक्षयिष्यामि मैथिलि ।
यदि मे व्याहृतं वाक्यं न यथावत्करिष्यसि

ततश्चण्डोदरी नाम राक्षसी क्रोधमूर्छिता ।
भ्रामयन्ती महच्छूलमिदं वचनमब्रवीत् ॥

इमां हरिणलोकाक्षीं त्रासोत्कम्पपयोधराम् ।
रावणेन हृतां दृष्ट्वा दौहृदो मे महानभूत् ॥

यकृत्प्लीहमथोत्पीडं हृदयं च सबन्धनम्
अन्त्राण्यपि तथा शीर्षं खादेयमिति मे मतिः

ततस्तु प्रघसा नाम राक्षसी वाक्यमब्रवीत् ।
कण्ठमस्या नृशंसायाः पीडयाम किमास्यते ॥

निवेद्यतां ततो राज्ञे मानुषी सा मृतेति ह ।
नात्र कश्चन संदेहः खादतेति स वक्ष्यति ॥

ततस्त्वजामुखी नाम राक्षसी वाक्यमब्रवीत् ।
विशस्येमां ततः सर्वाः समान्कुरुत पीलुकान् ॥

विश्रमाय ततः सर्वा विशादो मे न रोचते ।
पेयमानीयतां क्षिप्रं लेह्यमुच्चावचं मधु ॥ ४९ ॥

ततः शूर्पणखा नाम राक्षसी वाक्यमब्रवीत् ।
अजामुख्या यदुक्तं हि तदेव मम रोचते ।

सुरा चानीयतां क्षिप्रं सर्वशोकविनाशिनी
मानुषं मांसमास्वाद्य नृत्यामोऽथ निकुम्भिलाम् ॥

एवं संभर्त्स्यमाना सा सीता सुरसुतोपमा ।
राक्षसीभिः सुघोराभिर्धैर्यमुत्सृज्य रोदिति ॥

इति चतुर्विंशः सर्गः ।

—※—

## पञ्चविंशः सर्गः ॥

———

तथा तासां वदन्तीनां परुषं दारुणं बहु ।
राक्षसीनामसौम्यानां रुरोद जनकात्मजा ॥

एवमुक्ता तु वैदेही राक्षसीभिर्मनस्विनी ।
उवाच परमत्रस्ता बाष्पगद्गदया गिरा ॥ २ ॥

न मानुषी राक्षसस्य भार्या भवितुमर्हति ।
कामं खादत मां सर्वा न करिष्यामि वो वचः

सा राक्षसीमध्यगता सीता सुरसुतोपमा ।
न शर्म लेभे दुःखार्ता रावणेन च तर्जिता ॥

वेपते स्माधिकं सीता विशन्तीवाङ्गमात्मनः ।
वने यूथपरिभ्रष्टा मृगी कोकैरिवार्दिता ॥ ५

सा त्वशोकस्य विपुलां शाखामालम्ब्य पुष्पिताम्
चिन्तयामास शोकेन भर्तारं भग्नमानसा ॥६॥

सा स्नापयन्ती विपुलौ स्तनौ नेत्रजलस्रवैः
चिन्तयन्ती न शोकस्य तदान्तमधिगच्छति ॥

सा वेपमाना पतिता प्रवाते कदली यथा ।
राक्षसीनां भयत्रस्ता विषण्णवदनाभवत् ॥८।

तस्याः सा दीर्घविपुला सीताया वेपितात्मनः
ददृशे कम्पिनी वेणी व्यालीव परिसर्पती ॥

सा निःश्वसन्ती दुःखार्ता शोकोपहतचेतना ।
आर्ता व्यसृजदश्रूणि मैथिली विललाप ह ॥

हा रामेति च दुःखार्ता हा पुनर्लक्ष्मणेति च ।
हा श्वश्रु मम कौसल्ये हा सुमित्रेति भामिनी ॥

लोकप्रवादः सत्योऽयं पण्डितैः समुदाहृतः ।
अकाले दुर्लभो मृत्युः स्त्रिया वा पुरुषस्य वा ॥

यत्राहमेवं क्रूराभी राक्षसीभिरिहार्दिता ।
जीवामि हीना रामेण मुहूर्तमपि दुःखिता ॥

एषाल्पपुण्या कृपणा विनशिष्याम्यनाथवत् ।
समुद्रमध्ये नौः पूर्णा वायुवेगैरिवाहता ॥ १४ ॥

भर्तारं तमपश्यन्ती राक्षसीवशमागता ।
सीदामि खलु शोकेन कूलं तोयहतं यथा ॥

तं पद्मदलपत्राक्षं सिंहविक्रान्तगामिनम् ।
धन्याः पश्यन्ति मे नाथं कृतज्ञं प्रियवादिनम् ॥

सर्वथा तेन हीनाया रामेण विदितात्मना ।
तीक्ष्णं विषमिवास्वाद्य दुर्लभं मम जीवितम् ॥

कीदृशं तु मया पापं पुरा जन्मान्तरे कृतम् ।
येनेदं प्राप्यते दुःखं मया घोरं सुदारुणम् ॥

जीवितं त्यक्तुमिच्छामि शोकेन महता हता ।
राक्षसीभिश्च रक्षन्त्या रामो नासाद्यते मया ॥

धिगस्तु खलु मानुष्यं धिगस्तु परवश्यताम् ।
न शक्यं यत्परित्यक्तुमात्मच्छन्देन जीवितम् ॥

इति पञ्चविंशः सर्गः ॥

—*—

षड्विंशः सर्गः ॥

—*—

प्रसक्ताश्रुमुखीत्येवं ब्रुवन्ती जनकात्मजा ।
अधोमुखमुखी बाला विलप्तुमुपचक्रमे ॥ १ ॥

उन्मत्तेव प्रमत्तेव भ्रान्तचित्तेव शोचती ।
उपावृत्ता किशोरीव विवेष्टन्ती महीतले ॥ २ ॥

राघवस्य प्रमत्तस्य रक्षसा कामरूपिणा ।
रावणेन प्रमथ्याहमानीताक्रोशती बलात् ॥ ३ ॥

राक्षसीवशमापन्ना भर्त्स्यमाना सुदारुणम् ।
चिन्तयन्ती सुदुःखार्ता नाहं जीवितुमुत्सहे ॥

न हि मे जीवितेनार्थो नैवार्थैर्न च भूषणैः ।
वसन्त्या राक्षसीमध्ये विना रामं महारथम् ॥

अश्मसारमिदं नूनमथवाप्यजरामरम् ।
हृदयं मम येनेदं न दुःखेनावशीर्यते ॥ ६ ॥

धिङ्मामनार्यामसतीं याहं तेन विनाकृता ।
मुहूर्तमपि रक्षामि जीवितं पापजीविता ॥ ७ ॥

का च मे जीविते श्रद्धा सुखे वा तं प्रियं विना ।
भर्तारं सागरान्ताया वसुधायाः प्रियंवदम् ॥

भिद्यतां भक्ष्यतां वापि शरीरं विसृजाम्यहम् ।
न चाप्यहं चिरं दुःखं सहेयं प्रियवर्जिता ।

चरणेनापि सव्येन न स्पृशेयं निशाचरम् ।
रावणं किं पुनरहं कामयेयं विगर्हितम् ॥ १० ॥

प्रत्याख्यातं न जानाति नात्मानं नात्मनः कुलम् ।
यो नृशंसस्वभावेन मां प्रार्थयितुमिच्छति ॥

छिन्ना भिन्ना विभक्ता वा दीप्ते वाग्नौ प्रदीपिता ।
रावणं नोपतिष्ठेयं किं प्रलापेन वश्चिरम् ॥

ख्यातः प्राज्ञः कृतज्ञश्च सानुक्रोशश्च राघवः ।
सद्वृत्तो निरनुक्रोशः शङ्के मद्भाग्यसंक्षयात् ॥

राक्षसानां जनस्थाने सहस्राणि चतुर्दश ।
येनैकेन निरस्तानि स मां किं नाभिपद्यते ।

निरुद्धा रावणेनाहमल्पवीर्येण रक्षसा ।
समर्थः खलु मे भर्ता रावणं हन्तुमाहवे ॥१५॥

विराधो दण्डकारण्ये येन राक्षसपुंगवः ।
रणे रामेण निहतः स मां किं नाभिपद्यते ॥

कामं मध्ये समुद्रस्य लङ्केयं दुष्प्रधर्षणा ।
न तु राघवबाणानां गतिरोधीह विद्यते ॥

किं नु तत्कारणं येन रामो दृढपराक्रमः ।
रक्षसापहृतां भार्यामिष्टां नाभ्यवपद्यते ॥१८॥

इहस्थां मां न जानीते शङ्के लक्ष्मणपूर्वजः ।
जानन्नपि हि तेजस्वी धर्षणं मर्षयिष्यति ॥

हृतेति योऽधिगत्वा मां राघवाय निवेदयेत् ।
गृध्रराजोऽपि स रणे रावणेन निपातितः ॥

कृतं कर्म महत्तेन मां तथाभ्यवपद्यता ।
तिष्ठता रावणद्वन्द्वे वृद्धेनापि जटायुषा ॥ २१ ॥

यदि मामिह जानीयाद्वर्तमानां स राघवः ।
अद्य बाणैरभिक्रुद्धः कुर्याल्लोकमराक्षसम् ॥

विधमेच्च पुरीं लङ्कां शोषयेच्च महोदधिम् ।
रावणस्य च नीचस्य कीर्तिं नाम च नाशयेत् ॥

ततो निहतनाथानां राक्षसीनां गृहे गृहे ।
यथाहमेवं रुदती तथा भूयो न संशयः ॥२४॥

अन्विष्य रक्षसां लङ्कां कुर्याद्रामः सलक्ष्मणः ।
न हि ताभ्यां रिपुर्दृष्टो मुहूर्तमपि जीवति ॥

चिताधूमाकुलपथा गृध्रमण्डलसंकुला ।
अचिरेण तु लङ्केयं श्मशानसदृशी भवेत् ।

अचिरेणैव कालेन प्राप्स्याम्येव मनोरथम् ।
दुष्प्रस्थानोऽयमाख्याति सर्वेषां वो विपर्ययम् ॥

यादृशानीह दृश्यन्ते लङ्कायामशुभानि वै ।
अचिरेणैव कालेन भविष्यति हतप्रभा ॥२८॥

नूनं लङ्का हते पापे रावणे राक्षसाधमे ।
शोषं यास्यति दुर्धर्षा प्रमदा विधवा यथा ॥

पुण्योत्सवसमुत्था च नष्टभर्त्री सराक्षसी ।
भविष्यति पुरी लङ्का नष्टभर्त्री यथाङ्गना ॥

नूनं राक्षसकन्यानां रुदन्तीनां गृहे गृहे ।
श्रोष्यामि न चिरादेव दुःखार्तानामिह ध्वनिम् ॥

सान्धकारा हतद्योता हतराक्षसपुंगवा ।
भविष्यति पुरी लङ्का निर्दग्धा रामसायकैः ॥

यदि नाम स शूरो मां रामो रक्तान्तलोचनः ।
जानीयाद्वर्तमानां हि रावणस्य निवेशने ॥

अनेन तु नृशंसेन रावणेनाधमेन मे ।
समयो यस्तु निर्दिष्टस्तस्य कालोऽयमागतः ॥

अकार्यं ये न जानन्ति नैर्ऋताः पापकारिणः ।
अधर्मात्तु महोत्पातो भविष्यति हि सांप्रतम् ॥

नैते धर्मं विजानन्ति राक्षसाः पिशिताशनाः ।
ध्रुवं मां प्रातराशार्थे राक्षसः कल्पयिष्यति ॥

साहं कथं करिष्यामि तं विना प्रियदर्शनम् ।
रामं रक्तान्तनयनमपश्यन्ती सुदुःखिता ॥

यदि कश्चित्प्रदाता मे विषस्याद्य भवेदिह ।
क्षिप्रं वैवस्वतं देवं पश्येयं पतिना विना ॥

नाजानाज्जीवतीं रामः स मां लक्ष्मणपूर्वजः ।
जानन्तौ तौ न कुर्यातां नोर्व्यां हि मम मार्गणम् ॥

नूनं ममैव शोकेन स वीरो लक्ष्मणाग्रजः ।
देवलोकमितो यातस्त्यक्त्वा देहं महीतले ॥

धन्या देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
मम पश्यन्ति ये नाथं रामं राजीवलोचनम् ॥

अथ वा न हि तस्यार्थो धर्मकामस्य धीमतः ।
मया रामस्य राजर्षेर्भार्यया परमात्मनः ॥

दृश्यमाने भवेत्प्रीतिः सौहृदं नास्त्यपश्यतः ।
नाशयन्ति कृतघ्नास्तु न रामो नाशयिष्यति ॥

किं नु मे न गुणाः केचित्किं वा भाग्यक्षयो मम ।
याहं सीदामि रामेण हीना मुख्येन भामिनी ॥

श्रेयो मे जीवितान्मर्तुं विहीनाया महात्मनः।
रामादक्लिष्टचारित्राच्छूराच्छत्रुनिबर्हणात् ॥

अथ वा न्यस्तशस्त्रौ तौ वने मूलफलाशिनौ।
भ्रातरौ हि नरश्रेष्ठौ संवृत्तौ वनगोचरौ ॥

अथ वा राक्षसेन्द्रेण रावणेन दुरात्मना।
छद्मना सादितौ शूरौ भ्रातरौ रामलक्ष्मणौ ॥

साहमेवं गते काले मर्तुमिच्छामि सर्वथा।
न च मे विहितो मृत्युरस्मिन्दुःखेऽपि वर्तति ॥

धन्याः खलु महात्मानो मुनयस्त्यक्तकिल्बिषाः।
जितात्मानो महाभागा येषां न स्तः प्रियाप्रिये ॥

प्रियान्न सम्भवेद्दुःखमप्रियादधिकं भयम्।
ताभ्यां हि ये वियुज्यन्ते नमस्तेषां महात्मनाम् ॥

साहं त्यक्ता प्रियार्हेण रामेण विदितात्मना।
प्राणांस्त्यक्ष्यामि पापस्य रावणस्य गता वशम् ॥

इति षड्विंशः सर्गः ॥



## सप्तविंशः सर्गः ।



इत्युक्ताः सीतया घोरा राक्षस्यः क्रोधमूर्छिताः ।
काश्चिज्जग्मुस्तदाख्यातुं रावणस्य तरस्विनः ॥

ततः सीतामुपागम्य राक्षस्यो घोरदर्शनाः ।
पुनः परुषमेकार्थमनर्थार्थमथाब्रुवन् ॥ २ ॥

अद्येदानीं तवानार्ये सीते पापविनिश्चये
राक्षस्यो भक्षयिष्यामो मांसमेतद्यथासुखम् ॥

सीतां ताभिरनार्याभिर्दृष्ट्वा संतर्जितां तदा ।
राक्षसी त्रिजटा वृद्धा शयाना वाक्यमब्रवीत् ॥

आत्मानं खादतानार्या न सीतां भक्षयिष्यथ ।
जनकस्य सुतामिष्टां स्नुषां दशरथस्य च ॥

स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः ।
राक्षसानामभावाय भर्तुरस्या जयाय च ॥

एवमुक्तास्त्रिजटया राक्षस्यः क्रोधमूर्छिताः ।
सर्वा एवाब्रुवन्भीतास्त्रिजटां तामिदं वचः ॥७॥

कथयस्व त्वया दृष्टः स्वप्नोऽयं कीदृशो निशि
तासां तु वचनं श्रुत्वा राक्षसीनां मुखोद्गतम् ।

उवाच वचनं काले त्रिजटा स्वप्नसंश्रितम् ।
गजदन्तमयीं दिव्यां शिबिकामन्तरिक्षगाम् ॥

युक्तां हंससहस्रेण स्वयमास्थाय राघवः ।
शुक्लमाल्याम्बरधरो लक्ष्मणेन सहागतः ॥

स्वप्ने चाद्य मया दृष्टा सीता शुक्लाम्बरावृता ।
सागरेण परिक्षिप्तं श्वेतं पर्वतमास्थिता ॥११॥

रामेण संगता सीता भास्करेण प्रभा यथा ।
राघवश्च मया दृष्टश्चतुर्दन्तं महागजम् ॥ १२ ॥

आरूढः शैलसंकाशं चचार सहलक्ष्मणः ।
ततस्तौ नरशार्दूलौ दीप्यमानौ स्वतेजसा ॥

शुक्लमाल्याम्बरधरौ जानकीं पर्युपस्थितौ ।
ततस्तस्य नगस्याग्रे आकाशस्थस्य दन्तिनः ॥

भर्त्रा परिगृहीतस्य जानकी स्कन्धमाश्रिता ।
भर्तुरङ्कात्समुत्पत्य ततः कमललोचना ॥ १५ ॥

चन्द्रसूर्यौ मया दृष्टौ पाणिना परिमार्जती ।
ततस्ताभ्यां कुमाराभ्यामास्थितः स गजोत्तमः ॥

सीतया च विशालाक्ष्या लङ्काया उपरि स्थितः ।
पाण्डुरर्षभयुक्तेन रथेनाष्टयुजा स्वयम् ॥ १७ ॥

इहोपयातः काकुत्स्थः सीतया सह भार्यया ।
लक्ष्मणेन सह भ्रात्रा विमाने पुष्पके स्थितः ॥

साण्डं त्रिभुवनं भीमं सर्वतः सचराचरम् ।
सर्वं ग्रस्तं मया दृष्टं रामेणाक्लिष्टकर्मणा ॥१९॥

क्षीरोदधिजले मध्ये श्वेतः शैलः समुच्छ्रितः ।
तस्य मूर्ध्नि ततः श्वेतश्चतुर्दन्तो महागजः ॥

तस्य पृष्ठे स्थितः श्रीमान्रामो राजीवलोचनः ।
आसीनः प्राङ्मुखः श्रीमानासने परमे शुभे ॥

अभिषिक्तस्तु काकुत्स्थः सर्वदेवैर्नमस्कृतः ।
सब्रह्मर्षिगणैः सिद्धैः सर्वतीर्थजलेन च ॥

शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः ।
सीता तत्र पृथुश्रोणी रराज जनकात्मजा ॥

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
प्रधानमग्रतः कृत्वा रामं तत्र ववन्दिरे ॥२४॥

पुनरेव मया दृष्टो रामो रमयतां वरः ।
विष्णुरेव स्वयं भूत्वा तस्मिन्नास्ते वरासने ॥

परं ब्रह्म परं सत्यं परं ज्ञानं परं तपः ।
परं बीजं परं क्षेत्रं परं कारणकारणम् ॥२६॥

शङ्खचक्रधरः श्रीमान्पुण्डरीकायतेक्षणः ।
श्रीवत्सवक्षा नित्यश्रीरक्षय्यः शाश्वतो ध्रुवः ॥

एवंभूतो महातेजा रामः कमललोचनः ।
सर्वलोकेश्वरः श्रीमान्रराज रघुनन्दनः ॥

ततो महेन्द्रः पितरो मुनीन्द्रा
गन्धर्वविद्याधरपन्नगेश्वराः ।
कृताभिषेकं परिवार्य रामं
मनुष्टुवुः प्राञ्जलयः प्रहृष्टाः ॥ १९ ॥

नृत्यन्ति गायन्ति समेत्य तत्र
वाद्यं प्रकुर्वन्ति सुरेन्द्रनार्यः ।

वंशाश्च वीणाप्रमुखाश्च भेर्यो
नदन्ति शुभ्राः पणवाश्च सर्वे ॥ १० ॥

ततोऽन्यत्र मया दृष्टो रामः सत्यपराक्रमः ।
लक्ष्मणेन सह भ्रात्रा सीतया सह भार्यया ॥

आरुह्य पुष्पकं दिव्यं विमानं सूर्यसन्निभम् ।
उत्तरां दिशमालोक्य जगाम पुरुषोत्तमः ॥

एवं स्वप्ने मया दृष्टो रामो विष्णुपराक्रमः ।
लक्ष्मणेन सह भ्रात्रा सीतया सह राघवः ॥

न हि रामो महातेजाः शक्यो जेतुं सुरासुरैः ।
राक्षसैर्वापि चान्यैर्वा स्वर्गः पापजनैरिव ॥

रावणश्च मया दृष्टः क्षितौ तैलसमुक्षितः ।
रक्तवासाः पिबन्मत्तः करवीरकृतस्रजः ॥१५॥

विमानात्पुष्पकादद्य रावणः पतितो भुवि ।
कृष्यमाणः स्त्रिया दृष्टो मुण्डः कृष्णाम्बरः पुनः ॥

रथेन खरयुक्तेन रक्तमाल्यानुलेपनः ।
पिबंस्तैलं हसन्नृत्यन्भ्रान्तचित्ताकुलेन्द्रियः ॥

गर्दभेन ययौ शीघ्रं दक्षिणां दिशमास्थितः ।
पुनरेव मया दृष्टो रावणो राक्षसेश्वरः ॥ ३८ ॥

पतितोऽवाक्शिरा भूमौ गर्दभाद्भयमोहितः ।
सहसोत्थाय सम्भ्रान्तो भयार्तो मदविह्वलः ।

उन्मत्त इव दिग्वासा दुर्वाक्यं प्रलपन्मुहुः ।
दुर्गन्धं दुःसहं घोरं तिमिरं नरकोपमम् ।

मलपङ्कं प्रविश्याशु मग्नस्तत्र स रावणः ।
कण्ठे बद्ध्वा दशग्रीवं प्रमदा रक्तवासिनी ॥

काली कर्दमलिप्ताङ्गी दिशं याम्यां प्रकर्षति ।
एवं तत्र मया दृष्टः कुम्भकर्णो निशाचरः ।

रावणस्य सुताः सर्वे मुण्डास्तैलसमुक्षिताः ।
वराहेण दशग्रीवः शिंशुमारेण चेन्द्रजित् ।

उष्ट्रेण कुम्भकर्णश्च प्रयातो दक्षिणां दिशम् ।
एकस्तत्र मया दृष्टः श्वेतच्छत्रो विभीषणः ॥

शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः ।
शङ्खदुन्दुभिनिर्घोषैर्नृत्तगीतैरलङ्कृतः ॥ ४५ ॥

आरुह्य शैलसंकाशं मेघस्तनितनिःस्वनम् ।
चतुर्दन्तं गजं दिव्यमास्ते तत्र विभीषणः ॥

चतुर्भिः सचिवैः सार्धं वैहायसमुपस्थितः ।
समाजश्च मया दृष्टो गीतवादित्रनिःस्वनः ।

पिबतां रक्तमाल्यानां रक्षसां रक्तवाससाम् ।
लङ्का चेयं पुरी रम्या सवाजिरथकुञ्जरा ।

सागरे पतिता दृष्टा भग्नगोपुरतोरणा ।
लङ्का दृष्टा मया स्वप्ने रावणेनाभिरक्षिता ॥

दग्धा रामस्य दूतेन वानरेण तरस्विना ।
पीत्वा तैलं प्रनृत्ताश्च प्रहसन्त्यो महास्वनाः ॥

लङ्कायां भस्मरूक्षायां प्रविष्टा राक्षसस्त्रियः ।
कुम्भकर्णादयश्चेमे सर्वे राक्षसपुंगवाः ॥ ५१ ॥

रक्तं निवसनं गृह्य प्रविष्टा गोमयह्रदे ।
अपगच्छत नश्यध्वं सीतामाप स राघवः ॥

घातयेत्परमामर्षी सर्वैः सार्धं हि राक्षसैः ।
प्रियां बहुमतां भार्यां वनवासमनुव्रताम् ॥५३॥

भर्त्सितां तर्जितां वापि नानुमंस्यति राघवः ।
तदलं क्रूरवाक्यैर्वः सान्त्वमेवाभिधीयताम् ॥

अभियाचाम वैदेहीमेतद्धि मम रोचते ।
यस्यामेवंविधः स्वप्नो दुःखितायां प्रदृश्यते ॥

सा दुःखैर्विविधैर्मुक्ता प्रियं प्राप्नोत्यनुत्तमम् ।
भर्त्सितामपि याचध्वं राक्षस्यः किं विवक्षया ।

राघवाद्धि भयं घोरं राक्षसानामुपस्थितम्
प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ॥
अलमेषा परित्रातुं राक्षसीर्महतो भयात् ।
अपि चास्या विशालाक्ष्या न किंचिदुपलक्षये ।

विरूपमपि चाङ्गेषु सुसूक्ष्ममपि लक्षणम् ।
छायावैगुण्यमात्रं तु शङ्के दुःखमुपस्थितम् ॥

अदुःखार्हामिमां देवीं वैहायसमुपस्थिताम् ।
अर्थसिद्धिं तु वैदेह्याः पश्याम्यहमुपस्थिताम् ॥

राक्षसेन्द्रविनाशं च विजयं राघवस्य च ।
निमित्तभूतमेतत्तु श्रोतुमस्या महत्प्रियम् ॥६१॥

दृश्यते च स्फुरच्चक्षुः पद्मपत्रमिवायतम् ।
ईषच्च हृषितो वास्या दक्षिणाया ह्यदक्षिणः ॥

अकस्मादेव वैदेह्या बाहुरेकः प्रकम्पते ।
करेणुहस्तप्रतिमः सव्यश्चोरुरनुत्तमः ।
वेपमानः सूचयति राघवं पुरतः स्थितम् ॥

पक्षी च शाखानिलयं प्रविष्टः
पुनः पुनश्चोत्तमसान्त्ववादी ।
सुखागतां वाचमुदीरयाणः
पुनः पुनश्चोदयतीव हृष्टः ॥ ६४ ॥

इति सप्तविंशः सर्गः ॥



## अष्टाविंशः सर्गः ॥



सा राक्षसेन्द्रस्य वचो निशम्य
तद्रावणस्याप्रियमप्रियार्ता ।
सीता वितत्रास यथा वनान्ते
सिंहाभिपन्ना गजराजकन्या ॥ १ ॥

सा राक्षसीमध्यगता च भीरु-
र्वाग्भिर्भृशं रावणतर्जिता च ।
कान्तारमध्ये विजने विसृष्टा
बालेव कन्या विललाप सीता ॥ २ ॥

सत्यं बतेदं प्रवदन्ति लोके
नाकालमृत्युर्भवतीति सन्तः ।
यत्राहमेवं परिभर्त्स्यमाना
जीवामि किंचित्क्षणमप्यपुण्या ॥ ३ ॥

सुखाद्विहीनं बहुदुःखपूर्ण-
मिदं तु नूनं हृदयं स्थिरं मे ।
विशीर्यते यन्न सहस्रधाद्य
वज्राहतं शृङ्गमिवाचलस्य ॥ ४ ॥

नैवास्ति दोषो मम नूनमत्र
वध्याहमस्याप्रियदर्शनस्य ।
भावं न चास्याहमनुप्रदातु-
मलं द्विजो मन्त्रमिवाद्विजाय ॥ ५ ॥

नूनं ममाक्रान्त्यचिरादनार्यः
  शस्त्रैः क्षितेश्छेत्स्यति राक्षसेन्द्रः ।
तदिप्यमनागच्छति लोकनाथे
  गर्भस्थजन्तोरिव शल्यकृन्तः ॥ ६ ॥

दुःखं वतेदं मम दुःखिताया
  मासौ चिरायाधिगमिष्यतो द्वौ ।
बद्धस्य वध्यस्य तथा निशान्ते
  राजापराधादिव तस्करस्य ॥ ७ ॥

हा राम हा लक्ष्मण हा सुमित्रे
  हा राममातः सह मे जनन्या ।
एषा विपद्याम्यहमल्पभाग्या
  महार्णवे नौरिव मूढवाता ॥ ८ ॥

तरस्विनौ धारयता मृगस्य
  सत्त्वेन रूपं मनुजेन्द्रपुत्रौ ।
नूनं विशस्तौ मम कारणात्तौ
  सिंहर्षभौ द्रुमाविव वैद्युतेन ॥ ९ ॥

नूनं स कालो मृगरूपधारी
मामल्पभाग्यां लुलुभे तदानीम् ।
यत्रार्यपुत्रं विससर्ज मूढा
रामानुजं लक्ष्मणपूर्वजं च ॥ १० ॥

हा राम सत्यव्रत दीर्घबाहो
हा पूर्णचन्द्रप्रतिमानवक्त्र ।
हा जीवलोकस्य हित प्रियश्च
वध्यां न मां वेत्सि हि राक्षसानाम् ॥

अनन्यदेवत्वमियं क्षमा च
भूमौ च शय्या नियमश्च धर्मे ।
पतिव्रतात्वं विफलं ममेदं
कृतं कृतघ्नेष्विव मानुषाणाम् ॥ १२ ॥

मोघो हि धर्मश्चरितो ममायं
तथैकपत्नीत्वमिदं निरर्थम् ।
या त्वां न पश्यामि कृशा विवर्णा
हीना त्वया सङ्गमने निराशा ॥ १३ ॥

पितुर्निदेशं नियमेन कृत्वा
वनाभिवासं चरितव्रतस्त्वम्।
स्त्रीभिस्तु मन्ये विपुलेक्षणाभि-
स्त्वं रंस्यसे वीतभयः कृतार्थः॥ १४॥

अहं तु राम त्वयि जातकामा
चिरं विनाशाय निबद्धभावा।
मोघं चरित्वाथ तपो व्रतं च
त्यक्ष्यामि धिग्जीवितमल्पभाग्या॥

सा जीवितं क्षिप्रमहं त्यजेयं
विषेण शस्त्रेण शितेन वापि।
विषस्य दाता न हि मेऽस्ति कश्चि-
च्छस्त्रस्य वा वेश्मनि राक्षसस्य॥

इतीव देवी बहुधा विलप्य
सर्वात्मना राममनुस्मरन्ती।
प्रवेपमाना परिशुष्कवक्त्रा
नगोत्तमं पुष्पितमाससाद॥ १७॥

शोकाभितप्ता बहुधा विचिन्त्य
सीताथ वेण्युद्ग्रथनं गृहीत्वा ।
उद्बध्य वेण्युद्ग्रथनेन शीघ्र-
महं गमिष्यामि यमस्य मूलम् ॥ १८ ॥

उपस्थिता सा मृदुसर्वगात्री
शाखां गृहीत्वाथ नगस्य तस्य ।
तस्यास्तु रामं प्रविचिन्तयन्त्या
रामानुजं स्वं च कुलं शुभाङ्ग्याः ॥

शोकानिमित्तानि तथा बहूनि
धैर्यार्जितानि प्रवराणि लोके ।
प्रादुर्निमित्तानि तदा बभूवुः
पुरापि सिद्धान्युपलक्षितानि । २० ॥

इति अष्टाविंश सर्गः ॥



## एकोनत्रिंशः सर्गः ॥

तथागतां तां व्यथितामनिन्दितां
व्यपेतहर्षां परिदीनमानसाम् ।
शुभां निमित्तानि शुभानि भेजिरे
नरं श्रिया जुष्टमिवोपजीविनः ॥ १ ॥

तस्याः शुभं वाममरालपक्ष्म
राजीवृतं कृष्णविशालशुक्लम् ।
प्रास्पन्दतैकं नयनं सुकेश्या
मीनाहतं पद्ममिवाभिताम्रम् ॥ २ ॥

भुजश्च चार्वञ्चितपीनवृत्तः
परार्ध्यकालागरुचन्दनार्हः ।
अनुत्तमेनाध्युषित प्रियेण
चिरेण वामः समवेपताशु ॥ ३ ॥

गजेन्द्रहस्तप्रतिमश्च पीन
स्तयोर्द्वयोः संहतयोः सुजातः ।

प्रस्पन्दमानः पुनरूरुरस्याः
रामं पुरस्तात्स्थितमाचचक्षे ॥ ४ ॥

भुजश्च पूर्वैरसमानवर्ण-
पीनद्रुमोपास्तविलासकान्त्याः
वामः स्थितायाः शिखराग्रदत्याः
किंचित्परिस्पन्दत चारुगात्र्याः ॥ ५ ॥

एतैर्निमित्तैरपरैश्च सुभ्रूः
संबोधिता प्रागपि साधु सिद्धैः ।
वातातपक्लान्तमिव प्रणष्टं
हर्षेण बीजं प्रतिसंजहर्ष ॥ ६ ॥

तस्याः पुनर्बिम्बफलाधरोष्ठं
स्वक्षिभ्रुकेशान्तमराळपक्ष्म ।
वक्त्रं बभासे सितशुक्लदंष्ट्रं
राहोर्मुखाच्चन्द्र इव प्रमुक्तः ॥ ७ ॥

सा वीतशोका व्यपनीततन्द्री
शान्तज्वरा हर्षविबुद्धसत्त्वा ।

अशोभतार्या वदनेन शुक्ले
शीतांशुना रात्रिरिवोदितेन ॥ ८ ॥

इति एकोनत्रिंशः सर्गः ॥

—*—

त्रिंशः सर्गः ॥

—*—

हनुमानपि विश्रान्तः सर्वं शुश्राव तत्त्वतः ।
सीतायास्त्रिजटायाश्च राक्षसीनां च तर्जनम् ॥

अवेक्षमाणस्तां देवीं देवतामिव नन्दने ।
ततो बहुविधां चिन्तां चिन्तयामास वानरः ॥

यां कपीनां सहस्राणि सुबहून्ययुतानि च ।
दिक्षु सर्वासु मार्गन्ते सेयमासादिता मया ॥

चारेण तु सुयुक्तेन शत्रोः शक्तिमवेक्षता ।
गूढेन चरता तावदवेक्षितमिदं मया ॥ ४ ॥

राक्षसानां विशेषश्च पुरी चेयमवेक्षिता ।
राक्षसाधिपतेरस्य प्रभावो रावणस्य च ॥ ५ ॥

युक्तं तस्याप्रमेयस्य सर्वसत्त्वदयावतः ।
समाश्वासयितुं भार्यां पतिदर्शनकाङ्क्षिणीम् ॥

अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम् ।
अदृष्टदुःखां दुःखार्तां दुःखस्यान्तमगच्छतीम् ॥

यद्यप्यहमिमां देवीं शोकोपहतचेतनाम् ।
अनाश्वास्य गमिष्यामि दोषवद्गमनं भवेत् ।

गते हि मयि तत्रेयं राजपुत्री यशस्विनी ।
परित्राणमविन्दन्ती जानकी जीवितं त्यजेत् ।

मया च स महाबाहुः पूर्णचन्द्रनिभाननः ।
समाश्वासयितुं न्याय्यः सीतादर्शनलालसः ॥

निशाचरीणां प्रत्यक्षमनर्हं चापि भाषणम् ।
कथं नु खलु कर्तव्यमिदं कृच्छ्रगतो ह्यहम् ॥

अनेन रात्रिशेषेण यदि नाश्वास्यते मया ।
सर्वथा नास्ति संदेहः परित्यक्ष्यति जीवितम् ॥

रामश्च यदि पृच्छेन्मां किं मां सीताब्रवीद्वचः ।
किमहं तं प्रतिब्रूयामसंभाष्य सुमध्यमाम् ।

सीतासंदेशरहितं मामितस्त्वरया गतम् ।
निर्दहेदपि काकुत्स्थः क्रुद्धस्तीव्रेण चक्षुषा ॥

यदि चोद्योजयिष्यामि भर्तारं रामकारणात् ।
व्यर्थमागमनं तस्य ससैन्यस्य भविष्यति ॥

अन्तरं त्वहमासाद्य राक्षसीनामिह स्थितः ।
शनैराश्वासयिष्यामि संतापबहुलामिमाम् ॥

अहं ह्यतितनुश्चैव वानरश्च विशेषतः ।
वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम् ॥

यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।
रावणं मन्यमाना मां सीता भीता भविष्यति ॥

वानरस्य विशेषेण कथं स्यादभिभाषणम् ।
अवश्यमेव वक्तव्यं मानुषं वाक्यमर्थवत् ॥१९॥

मया सान्त्वयितुं शक्या नान्यथेयमनिन्दिता ।
सेयमालोक्य मे रूपं जानकी भाषितं तथा ॥

रक्षोभिस्त्रासिता पूर्वं भूयस्त्रासं गमिष्यति ।
ततो जातपरित्रासा शब्दं कुर्यान्मनस्विनी ॥

जानमाना विशालाक्षी रावणं कामरूपिणम् ।
सीतया च कृते शब्दे सहसा राक्षसीगणः ॥

नानाप्रहरणो घोरः समेयादन्तकोपमः ।
ततो मां संपरिक्षिप्य सर्वतो विकृताननाः ॥

वधे च ग्रहणे चैव कुर्युर्यत्नं यथाबलम् ।
गृह्य शाखाः प्रशाखाश्च स्कन्धांश्चोत्तमशाखिनाम्॥

दृष्ट्वा विपरिधावन्तं भवेयुर्भयशङ्किताः
मम रूपं च संप्रेक्ष्य वने विचरतो महत् ॥२६॥

राक्षस्यो भयवित्रस्ता भवेयुर्विकृताननाः ।
ततः कुर्युः समाह्वानं राक्षस्यो रक्षसामपि ।

राक्षसेन्द्रनियुक्तानां राक्षसेन्द्रनिवेशने ।
ते शूलशक्तिनिस्त्रिंशविविधायुधपाणयः ॥२७॥

आपतेयुर्विमर्देऽस्मिन्वेगेनोद्विग्नकारिणः ।
संक्रुद्धास्तैस्तु परितो विधमन्रक्षसां बलम् ॥

शक्नुयां न तु संप्राप्तुं परं पारं महोदधेः ।
मां वा गृह्णीयुराप्लुत्य बहवः शीघ्रकारिणः ॥

स्यादियं चागृहीतार्था मम च ग्रहणं भवेत् ।
हिंसाभिरुचयो हिंस्युरिमां वा जनकात्मजाम् ॥

विपन्नं स्यात्ततः कार्यं रामसुग्रीवयोरिदम् ।
उद्देशे नष्टमार्गेऽस्मिन्राक्षसैः परिवारिते ॥ ३१ ॥

सागरेण परिक्षिप्ते गुप्ते वसति जानकी ।
विशस्ते वा गृहीते वा रक्षोभिर्मयि संयुगे ॥

नान्यं पश्यामि रामस्य साहाय्यं कार्यसाधने ।
विमृशंश्च न पश्यामि यो हते मयि वानरः ॥

शतयोजनविस्तीर्णं लङ्घयेत महोदधिम् ।
कामं हन्तुं समर्थोऽस्मि सहस्राण्यपि रक्षसाम् ॥

न तु शक्ष्यामि संप्राप्तुं परं पारं महोदधेः ।
असत्यानि च युद्धानि संशयो मे न रोचते ॥

कश्च निःसंशयं कार्यं कुर्यात्प्राज्ञः ससंशयम् ।
प्राणत्यागश्च वैदेह्या भवेदनभिभाषणे ॥ ३५ ॥

एष दोषो महान्हि स्यान्मम सीताभिभाषणे ।
भूताश्चार्था विनश्यन्ति देशकालविरोधिताः ॥

विरुद्धं दूतमासाद्य तमः सूर्योदये यथा ।
अर्थानर्थान्तरे बुद्धिर्निश्चितापि न शोभते ॥

घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ।
न विनश्येत्कथं कार्यं वैक्लव्यं न कथं भवेत् ॥

लङ्घनं च समुद्रस्य कथं नु न वृथा भवेत् ।
कथं नु खलु वाक्यं मे शृणुयान्नोद्विजेत वा ॥

इति संचिन्त्य हनुमांश्चकार मतिमान्मतिम् ।
राममक्लिष्टकर्माणं स्वबन्धुमनुकीर्तयन् ॥ ४१ ॥

नैनामुद्वेजयिष्यामि तद्बन्धुगतमानसाम् ।
इक्ष्वाकूणां वरिष्ठस्य रामस्य विदितात्मनः ॥

शुभानि धर्मयुक्तानि वचनानि समर्पयन् ।
श्रावयिष्यामि सर्वाणि मधुरां प्रब्रुवन्गिरम् ।
श्रद्धास्यति यथा हीयं तथा सर्वं समादधे ॥

इति स बहुविधं महानुभावो
जगतिपतेः प्रमदामवेक्षमाणः ।

मधुरमवितथं जगाद वाक्यं
द्रुमविटपान्तरमास्थितो हनूमान् ॥४४॥

इति त्रिंशः सर्गः ॥

—*—

## एकत्रिंशः सर्गः ।

एवं बहुविधां चिन्तां चिन्तयित्वा महाकपिः ।
संश्रवे मधुरं वाक्यं वैदेह्या व्याजहार ह ॥१॥

राजा दशरथो नाम रथकुञ्जरवाजिमान् ।
पुण्यशीलो महाकीर्तिर्ऋजुरासीन्महायशाः ॥२॥

राजर्षीणां गुणश्रेष्ठस्तपसा चर्षिभिः समः ।
चक्रवर्तिकुले जातः पुरंदरसमो बले ॥ ३ ॥

अहिंसारतिरक्षुद्रो घृणी सत्यपराक्रमः ।
मुख्यश्चेक्ष्वाकुवंशस्य लक्ष्मीवाँल्लक्ष्मिवर्धनः ॥

पार्थिवव्यञ्जनैर्युक्तः पृथुश्रीः पार्थिवर्षभः ।
पृथिव्यां चतुरन्तायां विश्रुतः सुखदः सुखी ॥

तस्य पुत्रः प्रियो ज्येष्ठस्ताराधिपनिभाननः ।
रामो नाम विशेषज्ञः श्रेष्ठः सर्वधनुष्मताम् ॥

रक्षिता स्वस्य वृत्तस्य स्वजनस्यापि रक्षिता ।
रक्षिता जीवलोकस्य धर्मस्य च परंतपः ॥

तस्य सत्याभिसंधस्य वृद्धस्य वचनात्पितुः ।
सभार्यः सह च भ्रात्रा वीरः प्रव्राजितो वनम् ॥

तेन तत्र महारण्ये मृगयां परिधावता ।
राक्षसा निहताः शूरा बहवः कामरूपिणः ॥

जनस्थानवधं श्रुत्वा हतौ च खरदूषणौ ।
ततस्त्वमर्षापहृता जानकी रावणेन तु ॥ १० ॥

वञ्चयित्वा वने रामं मृगरूपेण मायया ।
स मार्गमाणस्तां देवीं रामः सीतामनिन्दिताम् ॥

आससाद वने मित्रं सुग्रीवं नाम वानरम्
ततः स वालिनं हत्वा रामः परपुरंजयः ॥

प्रायच्छत्कपिराज्यं तत्सुग्रीवाय महाबलः ।
सुग्रीवेणापि संदिष्टा हरयः कामरूपिणः ॥

विद्धि सर्वासु तां देवीं विचिन्वन्ति सहस्रशः
अहं संपातिवचनाच्छतयोजनमायतम् ॥ १४ ॥

अस्या हेतोर्विशालाक्ष्याः सागरं वेगवान्प्लुतः ।
यथारूपां यथावर्णां यथालक्ष्मीं च निश्चिताम् ॥

अश्रौषं राघवस्याहं सेयमासादिता मया ।
विररामैवमुक्त्वासौ वाचं वानरपुंगवः ॥१६॥

जानकी चापि तच्छ्रुत्वा विस्मयं परमं गता ।
ततः सा वक्रकेशान्ता सुकेशी केशसंवृतम् ।
उन्नम्य वदनं भीरुः शिंशुपावृक्षमैक्षत ॥ १७ ॥

निशम्य सीता वचनं कपेश्च
दिशश्च सर्वाः प्रदिशश्च वीक्ष्य ।
स्वयं प्रहर्षं परमं जगाम
सर्वात्मना राममनुस्मरन्ती ॥ १८ ॥

सा तिर्यगूर्ध्वं च तथाप्यधस्ता-
न्निरीक्षमाणा तमचिन्त्यबुद्धिम् ।

ददर्श पिङ्गाधिपतेरमात्यं
वातात्मजं सूर्यमिवोदयस्थम् ॥ १९ ॥

इति एकत्रिंशः सर्गः ॥

--*--

## द्वात्रिंशः सर्गः ॥

—*—

ततः शाखान्तरे लीनं दृष्ट्वा चलितमानसा ।
वेष्टितार्जुनवस्त्रं तं विद्युत्संघातपिङ्गलम् ॥ १ ॥

सा ददर्श कपिं तत्र प्रश्रितं प्रियवादिनम्
फुल्लाशोकोत्कराभासं तप्तचामीकरेक्षणम् ॥२॥

मैथिली चिन्तयामास विस्मयं परमं गता ।
अहो भीममिदं रूपं वानरस्य दुरासदम् ॥३॥

दुर्निरीक्ष्यमिति ज्ञात्वा पुनरेव मुमोह सा ।
विललाप भृशं सीता करुणं भयमोहिता ॥४॥

राम रामेति दुःखार्ता लक्ष्मणेति च भामिनी ।
रुरोद बहुधा सीता मन्दं मन्दस्वरा सती ॥

सा तं दृष्ट्वा हरिश्रेष्ठं विनीतवदुपस्थितम् ।
मैथिली चिन्तयामास स्वप्नोऽयमिति भामिनी ॥

सा वीक्षमाणा पृथुभुग्नवक्त्रं
शाखामृगेन्द्रस्य यथोक्तकारम् ।
ददर्श पिङ्गप्रवरं महार्हं
वातात्मजं बुद्धिमतां वरिष्ठम् ॥ ७ ॥

सा तं समीक्ष्यैव भृशं विसंज्ञा
गतासुकल्पेव बभूव सीता ।
चिरेण संज्ञां प्रतिलभ्य भूयो
विचिन्तयामास विशालनेत्रा ॥ ८ ॥

स्वप्ने मयायं विकृतोऽद्य दृष्टः
शाखामृगः शास्त्रगणैर्निषिद्धः ।
स्वस्त्यस्तु रामाय सलक्ष्मणाय
तथा पितुर्मे जनकस्य राज्ञः ॥ ९ ॥

स्वप्नोऽपि नायं न हि मेऽस्ति निद्रा
शोकेन दुःखेन च पीडितायाः ।
सुखं हि मे नास्ति यतोऽस्मि हीना
तेनेन्दुपूर्णप्रतिमाननेन ॥ १० ॥

रामेति रामेति सदैव बुद्ध्या
विचिन्त्य वाचा ब्रुवती तमेव ।
तस्यानुरूपां च कथां तदर्थ-
मेवं प्रपश्यामि तथा शृणोमि ॥ ११ ॥

अहं हि तस्याद्य मनोभवेन
संपीडिता तद्गतसर्वभावा ।
विचिन्तयन्ती सततं तमेव
तथैव पश्यामि तथा शृणोमि ॥ १२ ॥

मनोरथः स्यादिति चिन्तयामि
तथापि बुद्ध्या च वितर्कयामि ।
किं कारणं तस्य हि नास्ति रूपं
सुव्यक्तरूपश्च वदत्ययं माम् ॥ १३ ॥

नमोऽस्तु वाचस्पतये सवज्रिणे
स्वयंभुवे चैव हुताशनाय च ।
अनेन चोक्तं यदिदं ममाग्रतो
वनौकसा तच्च तथास्तु नान्यथा ।

इति द्वात्रिंशः सर्गः ॥

## अथ त्रयस्त्रिंशः सर्गः ॥



सोऽवतीर्य द्रुमात्तस्माद्विद्रुमप्रतिमाननः ।
विनीतवेषः कृपणः प्रणिपत्योपसृत्य च ॥ १ ॥

तामब्रवीन्महातेजा हनूमान्मारुतात्मजः ।
शिरस्यञ्जलिमाधाय सीतां मधुरया गिरा ॥

का नु पद्मपलाशाक्षि क्लिष्टकौशेयवासिनि ।
द्रुमस्य शाखामालम्ब्य तिष्ठसि त्वमनिन्दिते ॥

किमर्थं तव नेत्राभ्यां वारि स्रवति शोकजम् ।
पुण्डरीकपलाशाभ्यां विप्रकीर्णमिवोदकम् ॥

सुराणामसुराणां वा नागगन्धर्वरक्षसाम् ।
यक्षाणां किंनराणां वा का त्वं भवसि शोभने ॥

का त्वं भवसि रुद्राणां मरुतां वा वरानने ।
वसूनां वा वरारोहे देवता प्रतिभासि मे ॥६॥

किं नु चन्द्रमसा हीना पतिता विबुधालयात् ।
रोहिणी ज्योतिषां श्रेष्ठा श्रेष्ठा सर्वगुणान्विता ॥

का त्वं भवसि कल्याणि त्वमनिन्दितलोचने ।
कोपाद्वा यदि वा मोहाद्भर्तारमसितेक्षणे ॥८॥

वसिष्ठं कोपयित्वा त्वं नासि कल्याण्यरुन्धती ।
को नु पुत्रः पिता भ्राता भर्ता वा ते सुमध्यमे ॥

अस्माल्लोकादमुं लोकं गत त्वमनुशोचसि ।
रोदनादतिनिःश्वासाद्भूमिसंस्पर्शनादपि ॥१०॥

न त्वां देवीमहं मन्ये राज्ञः संज्ञावधारणात् ।
व्यञ्जनानि च ते यानि लक्षणानि च लक्षये ॥

महिषी भूमिपालस्य राजकन्यासि मे मता ।
रावणेन जनस्थानाद्बलादपहृता यदि ॥१२॥

सीता त्वमसि भद्रं ते तन्ममाचक्ष्व पृच्छतः ।
यथा हि तव वै दैन्यं रूपं चाप्यतिमानुषम् ॥

तपसा चान्वितो वेषस्त्वं राममहिषी ध्रुवम् ।
सा तस्य वचनं श्रुत्वा रामकीर्तनहर्षिता ॥

उवाच वाक्यं वैदेही हनुमन्तं द्रुमाश्रितम् ।
पृथिव्यां राजसिंहानां मुख्यस्य विदितात्मनः ॥

स्नुषा दशरथस्याहं शत्रुसैन्यप्रतापिनः।
दुहिता जनकस्याहं वैदेहस्य महात्मनः ॥१६॥

सीता च नाम नाम्नाहं भार्या रामस्य धीमतः।
समा द्वादश तत्राहं राघवस्य निवेशने ॥ १७॥

भुञ्जाना मानुषान्भोगान्सर्वकामसमृद्धिनी।
तत्र त्रयोदशे वर्षे राज्येनेक्ष्वाकुनन्दनम्।

अभिषेचयितुं राजा सोपाध्यायः प्रचक्रमे।
तस्मिन्सम्भ्रियमाणे तु राघवस्याभिषेचने ॥

कैकेयी नाम भर्तारं देवी वचनमब्रवीत्
न पिबेय न खादेयं प्रत्यह मम भोजनम् ॥

एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते।
यत्तदुक्तं त्वया वाक्यं प्रीत्या नृपतिसत्तम ॥

तच्चेन्न वितथं कार्यं वनं गच्छतु राघवः।
स राजा सत्यवाग्देव्या वरदानमनुस्मरन् ॥

मुमोह वचनं श्रुत्वा कैकेय्याः क्रूरमप्रियम्।
ततस्तु स्थविरो राजा सत्ये धर्मे व्यवस्थितः ॥

ज्येष्ठं यशस्विनं पुत्रं रुदन्राज्यमयाचत ।
स पितुर्वचनं श्रीमानभिषेकात्परं प्रियम् ॥
मनसा पूर्वमासाद्य वाचा प्रतिगृहीतवान् ।
दद्यान्न प्रतिगृह्णीयान्न ब्रूयात्किंचिदप्रियम् ॥
अपि जीवितहेतोर्वा रामः सत्यपराक्रमः ।
स विहायोत्तरीयाणि महार्हाणि महायशाः ॥
विसृज्य मनसा राज्यं जनन्यै मां समादिशत् ।
साहं तस्याग्रतस्तूर्णं प्रस्थिता वनचारिणी ॥
न हि मे तेन हीनाया वासः स्वर्गेऽपि रोचते ।
प्रागेव तु महाभागः सौमित्रिर्मित्रनन्दनः ॥
पूर्वजस्यानुयात्रार्थे द्रुमचीरैरलंकृतः ।
ते वयं भर्तुरादेशं बहुमान्य दृढव्रताः ॥ २९ ॥
प्रविष्टाः स्म पुरादृष्टं वनं गम्भीरदर्शनम् ।
वसतो दण्डकारण्ये तस्याहममितौजसः ॥
रक्षसापहृता भार्या रावणेन दुरात्मना ।
द्वौ मासौ तेन मे कालो जीवितानुग्रहः कृतः ।
ऊर्ध्वं द्वाभ्यां तु मासाभ्यां ततस्त्यक्ष्यामि जीवितम् ॥

इति त्रयस्त्रिंशः सर्गः ॥

## चतुस्त्रिंशः सर्गः ॥

तस्यास्तद्वचनं श्रुत्वा हनुमान्हरियूथपः ।
दुःखाद्दुःखाभिभूतायाः सान्त्वमुत्तरमब्रवीत् ॥

अहं रामस्य संदेशाद्देवि दूतस्तवागतः ।
वैदेहि कुशली रामस्त्वां च कौशलमब्रवीत् ॥

यो ब्राह्ममस्त्रं वेदांश्च वेद वेदविदां वरः ।
स त्वां दाशरथी रामो देवि कौशलमब्रवीत् ॥

लक्ष्मणश्च महातेजा भर्तुस्तेऽनुचरः प्रियः ।
कृतवाञ्शोकसंतप्तः शिरसा तेऽभिवादनम् ॥

सा तयोः कुशलं देवी निशम्य नरसिंहयोः ।
प्रीतिसंहृष्टसर्वाङ्गी हनुमन्तमथाब्रवीत् ॥ ५ ॥

कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ ६ ॥

तथा समागते तस्मिन्प्रीतिरुत्पादिताद्भुता ।
परस्परेण चालापं विश्वस्तौ तौ प्रचक्रतुः ॥

तस्यास्तद्वचनं श्रुत्वा हनुमान्हरियूथपः ।
सीतायाः शोकदीनायाः समीपमुपचक्रमे ॥

यथा यथा समीपं स हनुमानुपसर्पति ।
तथा तथा रावणं सा तं सीता परिशङ्कते ॥

अहो धिग्दुष्कृतमिदं कथितं हि यदस्य मे ।
रूपान्तरमुपागम्य स एवायं हि रावणः ॥

तामशोकस्य शाखां सा विमुक्त्वा शोककर्शिता ।
तस्यामेवानवद्याङ्गी धरण्यां समुपाविशत् ॥

हनुमानपि दुःखार्तां तां दृष्ट्वा भयमोहिताम् ।
अवन्दत महाबाहुस्ततस्तां जनकात्मजाम् ॥

सा चैनं भयवित्रस्ता भूयो नैवाभ्युदैक्षत ।
तं दृष्ट्वा वन्दमानं तु सीता शशिनिभानना ॥

अब्रवीद्दीर्घमुच्छ्वस्य वानरं मधुरस्वरा ।
मायां प्रविष्टो मायावी यदि त्वं रावणः स्वयम् ॥

उत्पादयसि मे भूयः संतापं तन्न शोभनम् ।
स्वं परित्यज्य रूपं यः परिव्राजकरूपधृत् ॥

जनस्थाने मया दृष्टस्त्वं स एवासि रावणः ।
उपवासकृशां दीनां कामरूप निशाचर ॥१५॥

संतापयसि मां भूयः संतप्तां तन्न शोभनम् ।
अथ वा नैतदेवं हि यन्मया परिशङ्कितम् ॥

मनसो हि मम प्रीतिरुत्पन्ना तव दर्शनात् ।
यदि रामस्य दूतस्त्वमागतो भद्रमस्तु ते ॥

पृच्छामि त्वां हरिश्रेष्ठ प्रिया रामकथा हि मे ।
गुणान्रामस्य कथय प्रियस्य मम वानर ॥

चित्तं हरसि मे सौम्य नदीकूलं यथा रयः ।
अहो स्वप्नस्य सुखता याऽहमेवं चिराहृता ॥

प्रेषितं नाम पश्यामि राघवेण वनौकसम् ।
स्वप्नेऽपि यद्यहं वीर राघवं सहलक्ष्मणम् ॥

पश्येयं नावसीदेयं स्वप्नोऽपि मम मत्सरी ।
नाहं स्वप्नमिमं मन्ये स्वप्ने दृष्ट्वा हि वानरम् ॥

न शक्योऽभ्युदयः प्राप्तुं प्राप्तश्चाभ्युदयो मम ।
किं नु स्याच्चित्तमोहोऽयं भवेद्वातगतिस्त्वियम् ॥

उन्मादजो विकारो वा स्यादियं मृगतृष्णिका।
अथ वा नायमुन्मादो मोहोऽप्युन्मादलक्षणः॥

संबुध्ये चाहमात्मानमिमं चापि वनौकसम्।
इत्येवं बहुधा सीता संप्रधार्य बलाबलम्॥

रक्षसां कामरूपत्वान्मेने तं राक्षसाधिपम्।
एतां बुद्धिं तदा कृत्वा सीता सा तनुमध्यमा॥

न प्रतिव्याजहाराथ वानरं जनकात्मजा।
सीतायाश्चिन्तितं बुद्ध्वा हनुमान्मारुतात्मजः॥

श्रोत्रानुकूलैर्वचनैस्तदा तां संप्रहर्षयत्।
आदित्य इव तेजस्वी लोककान्तः शशी यथा॥

राजा सर्वस्य लोकस्य देवो वैश्रवणो यथा।
विक्रमेणोपपन्नश्च यथा विष्णुर्महायशाः॥२९॥

सत्यवादी मधुरवाग्देवो वाचस्पतिर्यथा।
रूपवान्सुभगः श्रीमान्कन्दर्प इव मूर्तिमान्॥

स्थानक्रोधः प्रहर्ता च श्रेष्ठो लोके महारथः।
बाहुच्छायामवष्टब्धो यस्य लोको महात्मनः॥

अपकृष्याश्रमपदान्मृगरूपेण राघवम् ।
शून्ये येनापनीतासि तस्य द्रक्ष्यसि यत्फलम् ॥

न चिराद्रावणं संख्ये यो वधिष्यति वीर्यवान् ।
रोषप्रमुक्तैरिषुभिर्ज्वलद्भिरिव पावकैः ॥ ३३ ॥

तेनाहं प्रेषितो दूतस्त्वत्सकाशमिहागतः ।
त्वद्वियोगेन दुःखार्तः स त्वां कौशलमब्रवीत् ॥

लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्धनः
अभिवाद्य महाबाहुः स त्वां कौशलमब्रवीत् ॥

रामस्य च सखा देवि सुग्रीवो नाम वानरः ।
राजा वानरमुख्यानां स तां कौशलमब्रवीत् ॥

नित्य स्मरति रामस्त्वां ससुग्रीवः सलक्ष्मणः ।
दिष्ट्या जीवसि वैदेहि राक्षसीवशमागता ॥

न चिराद्द्रक्ष्यसे रामं लक्ष्मणं च महाबलम् ।
मध्ये वानरकोटीनां सुग्रीवं चामितौजसम् ॥

अहं सुग्रीवसचिवो हनुमान्नाम वानरः ।
प्रविष्टो नगरीं लङ्कां लङ्घयित्वा महोदधिम् ॥

कृत्वा मूर्ध्नि पदन्यासं रावणस्य दुरात्मनः ।
त्वां द्रष्टुमुपयातोऽहं समाश्रित्य पराक्रमम् ॥

नाहमस्मि तथा देवि यथा मामवगच्छसि ।
विशङ्का त्यज्यतामेषा श्रद्धत्स्व वदतो मम ॥

इति चतुस्त्रिंशः सर्गः ॥

—*—

## पञ्चत्रिंशः सर्गः ॥

—*—

तां तु रामकथां श्रुत्वा वैदेही वानरर्षभात् ।
उवाच वचनं सान्त्वमिदं मधुरया गिरा ॥१॥

क्व ते रामेण संसर्गः कथं जानासि लक्ष्मणम् ।
वानराणां नराणां च कथमासीत्समागमः ॥

यानि चिह्नानि रामस्य लक्ष्मणस्य च वानर ।
तानि भूयः समाचक्ष्व न मां शोकः समाविशेत् ॥

कीदृशं तस्य संस्थानं रूपं रामस्य कीदृशम् ।
कथमूरू कथं बाहू लक्ष्मणस्य च शंस मे ॥

एवमुक्तस्तु वैदेह्या हनुमान्पवनात्मजः ।
ततो रामं यथातत्त्वमाख्यातुमुपचक्रमे ॥ ५ ॥

जानती बत दिष्ट्या मां वैदेहि परिपृच्छसि ।
भर्तुः कमलपत्राक्षि संस्थानं लक्ष्मणस्य च ॥

यानि रामस्य चिह्नानि लक्ष्मणस्य च यानि वै ।
लक्षितानि विशालाक्षि वदतः शृणु तानि मे ॥

रामः कमलपत्राक्षः सर्वभूतमनोहरः ।
रूपदाक्षिण्यसंपन्नः प्रसूतो जनकात्मजे ॥ ८ ॥

तेजसादित्यसंकाशः क्षमया पृथिवीसमः ।
बृहस्पतिसमो बुद्ध्या यशसा वासवोपमः ॥

रक्षिता जीवलोकस्य स्वजनस्य च रक्षिता ।
रक्षिता स्वस्य वृत्तस्य धर्मस्य च परंतपः ॥

रामो भामिनि लोकेऽस्मिंश्चातुर्वर्ण्यस्य रक्षिता ।
मर्यादानां च लोकस्य कर्ता कारयिता च सः ॥

अर्चिष्मानर्चितो नित्यं ब्रह्मचर्यव्रते स्थितः ।
साधूनामुपकारज्ञः प्रचारज्ञश्च कर्मणाम् ॥१२॥

राजविद्याविनीतश्च ब्राह्मणानामुपासिता ।
श्रुतवाञ्शीलसंपन्नो विनीतश्च परंतपः ॥ १३ ॥

यजुर्वेदविनीतश्च वेदविद्भिः सुपूजितः ।
धनुर्वेदे च वेदेषु वेदाङ्गेषु च निष्ठितः ॥ १४ ॥

विपुलांसो महाबाहुः कम्बुग्रीवः शुभाननः ।
गूढजत्रुः सुताम्राक्षो देवि रामो जनैः श्रुतः ॥

दुन्दुभिस्वननिर्घोषः स्निग्धवर्णः प्रतापवान् ।
समः समविभक्ताङ्गो वर्णं श्यामं समाश्रितः ॥

त्रिस्थिरस्त्रिप्रलम्बश्च त्रिसमस्त्रिषु चोन्नतः
त्रिताम्रस्त्रिषु च स्निग्धो गम्भीरस्त्रिषु नित्यशः ॥

त्रिवलीवांस्त्र्यवनतश्चतुर्व्यङ्गस्त्रिशीर्षवान् ।
चतुष्कलश्चतुर्लेखश्चतुष्किष्कुश्चतुःसमः ॥१८॥

चतुर्दशसमद्वन्द्वश्चतुर्दंष्ट्रश्चतुर्गतिः ।
महोष्ठहनुनासश्च पञ्चस्निग्धोऽष्टवंशवान् ॥१९॥

दशपद्मो दशबृहत्त्रिभिर्व्याप्तो द्विशुक्लवान् ।
षडुन्नतो नवतनुस्त्रिभिर्व्याप्नोति राघवः ।

सत्यधर्मपरः श्रीमान्संग्रहानुग्रहे रतः ।
देशकालविभागज्ञः सर्वलोकप्रियंवदः ॥ २१ ॥

भ्रातापि तस्य द्वैमात्रः सौमित्रिरपराजितः ।
अनुरागेण रूपेण गुणैश्चैव तथाविधः ॥ २२ ॥

तावुभौ नरशार्दूलौ त्वद्दर्शनसमुत्सुकौ ।
विचिन्वन्तौ महीं कृत्स्नामस्माभिरभिसंगतौ ॥

त्वामेव मार्गमाणौ तौ विचरन्तौ वसुंधराम् ।
ददर्शतुर्मृगपतिं पूर्वजेनावरोपितम् ॥ २४ ॥

ऋश्यमूकस्य पृष्ठे तु बहुपादपसंकुले ।
भ्रातुर्भयार्तमासीन सुग्रीवं प्रियदर्शनम् ॥२५॥

वयं तु हरिराजं तं सुग्रीवं सत्यसंगरम् ।
परिचर्यामहे राज्यात्पूर्वजेनावरोपितम् ॥

ततस्तौ चीरवसनौ धनुःप्रवरपाणिनौ ।
ऋश्यमूकस्य शैलस्य रम्यं देशमुपागतौ ॥

स तौ दृष्ट्वा नरव्याघ्रौ धन्विनौ वानरर्षभः ।
अवप्लुतो गिरेस्तस्य शिखरं भयमोहितः ॥

ततः स शिखरे तस्मिन्वानरेन्द्रो व्यवस्थितः
तयोः समीपं मामेव प्रेषयामास सत्वरम् ॥

तावहं पुरुषव्याघ्रौ सुग्रीववचनात्प्रभू ।
रूपलक्षणसंपन्नौ कृताञ्जलिरुपस्थितः ॥ २१

तौ परिज्ञाततत्त्वार्थौ मया प्रीतिसमन्वितौ ।
पृष्ठमारोप्य तं देशं प्रापितौ पुरुषर्षभौ ॥३१॥

निवेदितौ च तत्त्वेन सुग्रीवाय महात्मने ।
तयोरन्योन्यसंलापाद्भृशं प्रीतिरजायत ॥३२

तत्र तौ कीर्तिसंपन्नौ हरीश्वरनरेश्वरौ ।
परस्परकृताश्वासौ कथया पूर्ववृत्तया ॥ ३३

तं ततः सान्त्वयामास सुग्रीवं लक्ष्मणाग्रजः
स्त्रीहेतोर्वालिना भ्रात्रा निरस्तमुरुतेजसा ॥

ततस्त्वन्नाशजं शोकं रामस्याक्लिष्टकर्मणः ।
लक्ष्मणो वानरेन्द्राय सुग्रीवाय न्यवेदयत् ॥

स श्रुत्वा वानरेन्द्रस्तु लक्ष्मणेनेरितं वचः ।
तदासीन्निष्प्रभोऽत्यर्थं ग्रहग्रस्त इवांशुमान् ॥

ततस्त्वद्राक्षसोपीनि रक्षसा ह्रियमाणया ।
यान्याभरणजालानि पातितानि महीतले ॥

तानि सर्वाणि चादाय रामाय हरियूथपाः ।
संहृष्टा दर्शयामासुर्गतिं तु न विदुस्तव ॥ ३८ ॥

तानि रामाय दत्तानि मयैवोपहृतानि च ।
स्वनवन्त्यवकीर्णानि तस्मिन्विगतचेतसि ॥

तान्यङ्के दर्शनीयानि कृत्वा बहुविधं तव ।
तेन देवप्रकाशेन देवेन परिदेवितम् ॥ ४० ॥

पश्यतस्तानि रुदतस्ताम्यतश्च पुनः पुनः ।
प्रादीपयन्दाशरथेस्तानि शोकहुताशनम् ॥

शयितं च चिरं तेन दुःखार्तेन महात्मना ।
मयापि विविधैर्वाक्यैः कृच्छ्रादुत्थापितः पुनः ॥

तानि दृष्ट्वा महार्हाणि दर्शयित्वा मुहुर्मुहुः ।
राघवः सहसौमित्रिः सुग्रीवे संन्यवेदयत् ॥

स तवादर्शनादार्ये राघवः परितप्यते ।
महता ज्वलता नित्यमग्निनेवाग्निपर्वतः ॥ ४४ ॥

त्वत्कृते तमनिद्रा च शोकश्चिन्ता च राघवम् ।
तापयन्ति महात्मानमग्न्यगारमिवाग्नयः ॥४५॥

तवादर्शनशोकेन राघवः प्रविचाल्यते ।
महता भूमिकम्पेन महानिव शिलोच्चयः ॥४६॥

काननानि सुरम्याणि नदीः प्रस्रवणानि च ।
चरन्न रतिमाप्नोति त्वामपश्यन्नृपात्मजे ॥

स त्वां मनुजशार्दूलः क्षिप्रं प्राप्स्यति राघवः ।
समित्रबान्धवं हत्वा रावणं जनकात्मजे ॥४८॥

सहितौ रामसुग्रीवावुभावकुरुतां तदा ।
समयं वालिनं हन्तुं तव चान्वेषणं तथा ॥

ततस्ताभ्यां कुमाराभ्यां वीराभ्यां स हरीश्वरः ।
किष्किन्धां समुपागम्य वाली युधि निपातितः ॥

ततो निहत्य तरसा रामो वालिनमाहवे ।
सर्वेषां हरिसंघानां सुग्रीवमकरोत्पतिम् ॥ ५१ ॥

रामसुग्रीवयोरैक्यं देव्येवं समजायत ।
हनूमन्तं च मां विद्धि तयोर्दूतमिहागतम् ॥

स्वराज्यं प्राप्य सुग्रीवः समानीय महाकपीन् ।
त्वदर्थं प्रेषयामास दिशो दश महाबलान् ॥

आदिष्टा वानरेन्द्रेण सुग्रीवेण वनौकसः ।
अद्रिराजप्रतीकाशाः सर्वतः प्रस्थिता महीम् ॥

ततस्तु मार्गमाणास्ते सुग्रीववचनातुराः ।
चरन्ति वसुधां कृत्स्नां वयमन्ये च वानराः ॥

अङ्गदो नाम लक्ष्मीवान्वालिसूनुर्महाबलः ।
प्रस्थितः कपिशार्दूलस्त्रिभागबलसंवृतः ॥५६॥

तेषां नो विप्रणष्टानां विन्ध्ये पर्वतसत्तमे ।
भृशं शोकपरीतानामहोरात्रगणा गताः ॥५७॥

ते वयं कार्यनैराश्यात्कालस्यातिक्रमेण च ।
भयाच्च कपिराजस्य प्राणांस्त्यक्तुं व्यवस्थिताः ॥

विचित्य वनदुर्गाणि गिरिप्रस्रवणानि च ।
अनासाद्य पदं देव्याः प्राणांस्त्यक्तुं समुद्यताः ॥

दृष्ट्वा प्रायोपविष्टांश्च सर्वान्वानरपुङ्गवान् ।
भृशं शोकार्णवे मग्नः पर्यदेवयदङ्गदः ॥ ६० ॥

शैव नाशं च वैदेहि वालिनश्च तथा वधम्
प्रायोपवेशमस्माकं मरणं च जटायुषः ॥६१॥

तेषां नः स्वामिसंदेशान्निराशानां मुमूर्षताम् ।
कार्यहेतोरिवायातः शकुनिर्वीर्यवान्महान् ॥६२॥

गृध्रराजस्य सोदर्यः संपातिर्नाम गृध्रराट् ।
श्रुत्वा भ्रातृवधं कोपादिदं वचनमब्रवीत् ॥

यवीयान्केन मे भ्राता हतः क्व च विनाशितः
एतदाख्यातमिच्छामि भवद्भिर्वानरोत्तमाः ॥

अङ्गदोऽकथयत्तस्य जनस्थाने महद्वधम् ।
रक्षसा भीमरूपेण त्वामुद्दिश्य यथातथम् ॥

जटायुषो वधं श्रुत्वा दुःखितः सोऽरुणात्मजः
त्वामाह स वरारोहे वसन्तीं रावणालये ॥

तस्य तद्वचनं श्रुत्वा संपातेः प्रीतिवर्धनम् ।
अङ्गदप्रमुखाः सर्वे ततः संप्रस्थिता वयम् ।

विन्ध्यादुत्थाय संप्राप्ताः सागरस्यान्तमुत्तरम् ।
त्वद्दर्शनकृतोत्साहा हृष्टास्तुष्टाः प्लवंगमाः ॥

अङ्गदप्रमुखाः सर्वे वेलोपान्तमुपागताः ।
चिन्तां जग्मुः पुनर्भीतास्त्वद्दर्शनसमुत्सुकाः ॥

अथाहं हरिसैन्यस्य सागरं प्रेक्ष्य सीदतः ।
व्यवधूय भयं तीव्रं योजनानां शतं प्लुतः ॥

लङ्का चापि मया रात्रौ प्रविष्टा राक्षसाकुला ।
रावणश्च मया दृष्टस्त्वं च शोकपरिप्लुता ॥

एतत्ते सर्वमाख्यातं यथावृत्तमनिन्दिते ।
अभिभाषस्व मां देवि दूतो दाशरथेरहम् ॥

तं मां रामकृतोद्योगं त्वन्निमित्तमिहागतम् ।
सुग्रीवसचिवं देवि बुध्यस्व पवनात्मजम् ॥

कुशली तव काकुत्स्थः सर्वशस्त्रभृतां वरः ।
गुरोराराधने युक्तो लक्ष्मणश्च सुलक्षणः ॥

तस्य वीर्यवतो देवि भर्तुस्तव हिते रतः ।
अहमेकस्तु संप्राप्तः सुग्रीववचनादिह ॥ ७५ ॥

मयेयमसहायेन चरता कामरूपिणा ।
दक्षिणा दिगनुक्रान्ता त्वन्मार्गविचयैषिणा ॥

दिष्ट्याहं हरिसैन्यानां त्वन्नाशमनुशोचताम् ।
अपनेष्यामि संतापं तवाभिगमशंसनात् ॥७७॥

दिष्ट्या हि मम न व्यर्थं देवि सागरलङ्घनम् ।
प्राप्स्याम्यहमिदं दिष्ट्या त्वद्दर्शनकृतं यशः ॥

राघवश्च महावीर्यः क्षिप्रं त्वामभिपत्स्यते ।
समित्रबान्धवं हत्वा रावणं राक्षसाधिपम् ॥

माल्यवान्नाम वैदेहि गिरीणामुत्तमो गिरिः ।
ततो गच्छति गोकर्णं पर्वतं केसरी हरिः ॥

स च देवर्षिभिर्दिष्टः पिता मम महाकपिः ।
तीर्थे नदीपतेः पुण्ये शम्बसादनमुद्धरत् ॥८१॥

तस्याहं हरिणः क्षेत्रे जातो वातेन मैथिलि ।
हनुमानिति विख्यातो लोके स्वेनैव कर्मणा ॥

विश्वासार्थं तु वैदेहि भर्तुरुक्ता मया गुणाः ।
अचिराद्राघवो देवि त्वामितो नयितानघे ॥

एवं विश्वासिता सीता हेतुभिः शोककर्शिता ।
उपपन्नैरभिज्ञानैर्दूतं तमवगच्छति ॥ ८४ ॥

अतुलं च गता हर्षं प्रहर्षेण च जानकी ।
नेत्राभ्यां वक्रपक्ष्मभ्यां मुमोचानन्दजं जलम् ॥

चारु तद्वदनं तस्यास्ताम्रशुक्लायतेक्षणम् ।
अशोभत विशालाक्ष्या राहुमुक्त इवोडुराट् ॥

हनुमन्तं कपिं व्यक्तं मन्यते नान्यथेति सा ।
अथोवाच हनूमांस्तामुत्तरं प्रियदर्शनाम् ॥

एतत्ते सर्वमाख्यातं समाश्वसिहि मैथिलि ।
किं करोमि कथं वा ते रोचते प्रतियाम्यहम् ॥

हतेऽसुरे संयति शम्बसादने
कपिप्रवीरेण महर्षिचोदनात् ।
ततोऽस्मि वायुप्रभवो हि मैथिलि
प्रभावतस्तत्प्रतिमश्च वानरः ॥ ८९ ॥

इति पञ्चत्रिंशः सर्गः ॥

—•—

## षट्त्रिंशः सर्गः ॥



भूय एव महातेजा हनुमान्मारुतात्मजः ।
अब्रवीत्प्रश्रितं वाक्यं सीताप्रत्ययकारणात् ॥

वानरोऽहं महाभागे दूतो रामस्य धीमतः ।
रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ॥

प्रत्ययार्थं तवानीतं तेन दत्तं महात्मना ।
समाश्वसिहि भद्रं ते क्षीणदुःखफला ह्यसि ॥

गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषणम् ।
भर्तारमिव संप्राप्ता जानकी मुदिताभवत् ॥

चारु तद्वदनं तस्यास्ताम्रशुक्लायतेक्षणम् ।
अशोभत विशालाक्ष्या राहुमुक्त इवोडुराट् ॥

ततः सा ह्रीमती बाला भर्तृसंदेशहर्षिता ।
परितुष्टा प्रियं कृत्वा प्रशशंस महाकपिम् ॥

विक्रान्तस्त्वं समर्थस्त्वं प्राज्ञस्त्वं वानरोत्तम ।
येनेदं राक्षसपदं त्वयैकेन प्रधर्षितम् ॥ ७ ॥

शतयोजनविस्तीर्णः सागरो मकरालयः ।
विक्रमश्लाघनीयेन क्रमता गोष्पदीकृतः ॥ ८ ॥

न हि त्वां प्राकृतं मन्ये वानरं वानरर्षभ ।
यस्य ते नास्ति संत्रासो रावणान्नापि संभ्रमः ॥

अर्हसे च कपिश्रेष्ठ मया समभिभाषितुम् ।
यद्यपि प्रेषितस्तेन रामेण विदितात्मना ॥१०॥

प्रेषयिष्यति दुर्धर्षो रामो न ह्यपरीक्षितम् ।
पराक्रममविज्ञाय मत्सकाशं विशेषतः ॥ ११ ॥

दिष्ट्या स कुशली रामो धर्मात्मा सत्यसंगरः ।
लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्धनः ॥१२॥

कुशली यदि काकुत्स्थः किं नु सागरमेखलाम् ।
महीं दहति कोपेन युगान्ताग्निरिवोत्थितः ॥

अथ वा शक्तिमन्तौ तौ सुराणामपि निग्रहे ।
ममैव तु न दुःखानामस्ति मन्ये विपर्ययः ॥

कच्चिन्न व्यथितो रामः कच्चिन्न परितप्यते ।
उत्तराणि च कार्याणि कुरुते पुरुषोत्तमः ॥

कच्चिन्न दीनः संभ्रान्तः कार्येषु च न मुह्यति।
कच्चित्पुरुषकार्याणि कुरुते नृपतेः सुतः ॥१६॥

द्विविधं त्रिविधोपायमुपायमपि सेवते।
विजिगीषुः सुहृत्कच्चिन्मित्रेषु च परंतपः।

कच्चिन्मित्राणि लभते मित्रैश्चाप्यभिगम्यते।
कच्चित्कल्याणमित्रश्च मित्रैश्चापि पुरस्कृतः॥

कच्चिदाशास्ति देवानां प्रसादं पार्थिवात्मजः।
कच्चित्पुरुषकारं च दैवं च प्रतिपद्यते॥ १९॥

कच्चिन्न विगतस्नेहः विवासान्मयि राघवः।
कच्चिन्मां व्यसनादस्मान्मोक्षयिष्यति वानर॥

सुखानामुचितो नित्यमसुखानामनूचितः।
दुःखमुत्तरमासाद्य कच्चिद्रामो न सीदति॥

कौसल्यायास्तथा कच्चित्सुमित्रायास्तथैव च।
अभीक्ष्णं श्रूयते कच्चित्कुशलं भरतस्य च॥

मन्निमित्तेन मानार्हः कच्चिच्छोकेन राघवः
कच्चिन्नान्यमना रामः कच्चिन्मां तारयिष्यति॥

कच्चिदक्षौहिणीं भीमां भरतो भ्रातृवत्सलः ।
ध्वजिनीं मन्त्रिभिर्गुप्तां प्रेषयिष्यति मत्कृते ॥

वानराधिपतिः श्रीमान्सुग्रीवः कच्चिदेष्यति ।
मत्कृते हरिभिर्वीरैर्वृतो दन्तनखायुधैः ॥ २५ ॥

कच्चिच्च लक्ष्मणः शूरः सुमित्रानन्दवर्धनः ।
अस्त्रविच्छरजालेन राक्षसान्विधमिष्यति ॥

रौद्रेण कच्चिदस्त्रेण ज्वलता निहतं रणे ।
द्रक्ष्याम्यल्पेन कालेन रावणं ससुहृज्जनम् ॥

कच्चिच्च तद्धेमसमानवर्णं
तस्याननं पद्मसमानगन्धि ।
मया विना शुष्यति शोकदीनं
जलक्षये पद्ममिवातपेन ॥ २८ ॥

धर्मापदेशात्त्यजतश्च राज्यं
मां चाप्यरण्यं नयतः पदातिम् ।
नासीद्व्यथा यस्य न भीर्न शोकः
कच्चित्स धैर्यं हृदये करोति ॥ २९ ॥

न चास्य माता न पिता च नान्यः
स्नेहाद्विशिष्टोऽस्ति मया समो वा ।
तावत्यहं दूत जिजीविषेयं
यावत्प्रवृत्तिं शृणुयां प्रियस्य ॥ ३० ॥

इतीव देवी वचनं महार्थं
तं वानरेन्द्रं मधुरार्थमुक्त्वा ।
श्रोतुं पुनस्तस्य वचोऽभिरामं
रामार्थयुक्तं विरराम रामा ॥ ३१ ॥

सीताया वचनं श्रुत्वा मारुतिर्भीमविक्रमः ।
शिरस्यञ्जलिमाधाय वाक्यमुत्तरमब्रवीत् ।

न त्वामिहस्थां जानीते रामः कमललोचने ।
तेन त्वां नानयत्याशु शचीमिव पुरंदरः ।

श्रुत्वैव तु वचो मम क्षिप्रमेष्यति राघवः ।
चमूं प्रकर्षन्महतीं हर्यृक्षगणसंकुलाम् ॥ ३४ ॥

विष्टम्भयित्वा बाणौघैरक्षोभ्यं वरुणालयम् ।
करिष्यति पुरीं लङ्कां काकुत्स्थः शान्तराक्षसाम् ॥

तत्र यद्यन्तरा मृत्युर्यदि देवाः सहासुराः ।
स्थास्यन्ति पथि रामस्य स तानपि वधिष्यति ॥

तवादर्शनजेनार्ये शोकेन स परिप्लुतः ।
न शर्म लभते रामः सिंहार्दित इव द्विपः ॥

मलयेन च विन्ध्येन मेरुणा मन्दरेण च ।
दर्दुरेण च ते देवि शपे मूलफलेन च ॥ ३८ ॥

यथा सुनयनं वल्गु बिम्बोष्ठं चारुकुण्डलम् ॥
मुखं द्रक्ष्यसि रामस्य पूर्णचन्द्रमिवोदितम् ॥

क्षिप्रं द्रक्ष्यसि वैदेहि रामं प्रस्रवणे गिरौ ।
शतक्रतुमिवासीनं नाकपृष्ठस्य मूर्धनि ॥ ४० ॥

न मांसं राघवो भुङ्क्ते न चापि मधु सेवते ।
वन्यं सुविहितं नित्यं भक्तमश्नाति पञ्चमम् ॥

नैव दंशान्न मशकान्न कीटान्न सरीसृपान् ।
राघवोऽपनयेद्गात्रात्त्वद्गतेनान्तरात्मना ॥४२॥

नित्यं ध्यानपरो रामो नित्यं शोकपरायणः ।
नान्यच्चिन्तयते किंचित्स तु कामवशं गतः ॥

अनिद्रः सततं रामः सुप्तोऽपि च नरोत्तमः ।
सीतेति मधुरां वाणीं व्याहरन्प्रतिबुध्यते ॥

दृष्ट्वा फलं वा पुष्पं वा यद्वान्यत्सुमनोहरम् ।
बहुशो हा प्रियेत्येवं श्वसंस्त्वामभिभाषते ॥

स देवि नित्यं परितप्यमान
स्त्वामेव सीतेत्यभिभाषमाणः ।
धृतव्रतो राजसुतो महात्मा
तवैव लाभाय कृतप्रयत्नः ॥ ४६ ॥

सा रामसंकीर्तनवीतशोका
रामस्य शोकेन समानशोका ।
शरन्मुखे साम्बुदशेषचन्द्रा
निशेव वैदेहसुता बभूव ॥ ४७ ॥

इति षट्त्रिंशः सर्गः ॥



## सप्तत्रिंशः सर्गः ।

---

सीता तद्वचनं श्रुत्वा पूर्णचन्द्रनिभानना ।
हनूमन्तमुवाचेदं धर्मार्थसहितं वचः ॥ १ ॥

अमृतं विषसंसृष्टं त्वया वानर भाषितम् ।
यच्च नान्यमना रामो यच्च शोकपरायणः ॥

ऐश्वर्ये वा सुविस्तीर्णे व्यसने वा सुदारुणे ।
रज्ज्वेव पुरुषं बद्ध्वा कृतान्तः परिकर्षति ॥

विधिर्नूनमसंहार्यः प्राणिनां प्लवगोत्तम
सौमित्रिं मां च रामं च व्यसनैः पश्य मोहितान्॥

शोकस्यास्य कदा पारं राघवोऽधिगमिष्यति ।
प्लवमानः परिश्रान्तो हतनौः सागरे यथा ॥

राक्षसानां वधं कृत्वा सूदयित्वा च रावणम् ।
लङ्कामुन्मूलितां कृत्वा कदा द्रक्ष्यति मां पतिः ॥

स वाच्यः संत्वरस्वेति यावदेव न पूर्यते ।
अयं संवत्सरः कालस्तावद्धि मम जीवितम् ॥

वर्तेते दशमो मासो द्वौ तु शेषौ प्लवंगम ।
रावणेन नृशंसेन समयो यः कृतो मम ॥ ८ ॥

विभीषणेन च भ्रात्रा मम निर्यातनं प्रति ।
अनुनीतः प्रयत्नेन न च तत्कुरुते मतिम् ॥

मम प्रतिप्रदानं हि रावणस्य न रोचते ।
रावणं मार्गते सङ्ख्ये मृत्युः कालवशं गतम् ॥

ज्येष्ठा कन्यानला नाम विभीषणसुता कपे ।
तया ममेदमाख्यातं मात्रा प्रहितया स्वयम् ॥

आशंसेयं हरिश्रेष्ठ क्षिप्रं मां प्राप्स्यते पतिः ।
अन्तरात्मा हि मे शुद्धस्तस्मिंश्च बहवो गुणाः ॥

उत्साहः पौरुषं सत्त्वमानृशंस्यं कृतज्ञता ।
विक्रमश्च प्रभावश्च सन्ति वानर राघवे ॥१२॥

चतुर्दश सहस्राणि राक्षसानां जघान यः ।
जनस्थाने विना भ्रात्रा शत्रुः कस्तस्य नोद्विजेत् ॥

न स शक्यस्तुलयितुं व्यसनैः पुरुषर्षभः ।
अहं तस्य प्रभावज्ञा शक्रस्येव पुलोमजा ॥

शरजालांशुमाञ्छूरः कपे रामदिवाकरः ।
शत्रुरक्षोमयं तोयमुपशोषं नयिष्यति ॥ १६ ॥

इति संजल्पमानां तां रामार्थे शोककर्शिताम् ।
अश्रुसंपूर्णनयनामुवाच वचनं कपिः ॥ १७ ॥

श्रुत्वैव तु वचो मह्यं क्षिप्रमेष्यति राघवः ।
चमूं प्रकर्षन्महतीं हर्यृक्षगणसंकुलाम् ॥ १८ ॥

अथ वा मोचयिष्यामि त्वामद्यैव वरानने ।
अस्माद्दुःखादुपारोह मम पृष्ठमनिन्दिते ॥ १९ ॥

त्वां तु पृष्ठगतां कृत्वा संतरिष्यामि सागरम् ।
शक्तिरस्ति हि मे वोढुं लङ्कामपि सरावणाम् ॥

अहं प्रस्रवणस्थाय राघवायाद्य मैथिलि ।
प्रापयिष्यामि शक्राय हव्यं हुतमिवानलः ।

द्रक्ष्यस्यद्यैव वैदेहि राघवं सहलक्ष्मणम् ।
व्यवसायसमायुक्तं विष्णुं दैत्यवधे यथा ॥

त्वद्दर्शनकृतोत्साहमाश्रमस्थं महाबलम् ।
पुरंदरमिवासीनं नागराजस्य मूर्धनि ॥ २३ ॥

पृष्ठमारोह मे देवि मा विकाङ्क्षस्व शोभने ।
योगमन्विच्छ रामेण शशाङ्केनेव रोहिणी ॥

पौलोमीव महेन्द्रेण सूर्येणेव सुवर्चला ।
मत्पृष्ठमधिरुह्य त्वं तराकाशमहार्णवम् ॥ २५ ॥

न हि मे संप्रयातस्य त्वामितो नयतोऽङ्गने ।
अनुगन्तुं गतिं शक्ताः सर्वे लङ्कानिवासिनः ॥

यथैवाहमिह प्राप्तस्तथैवाहमसंशयम् ।
यास्यामि पश्य वैदेहि त्वामुद्यम्य विहायसम् ॥

मैथिली तु हरिश्रेष्ठाच्छ्रुत्वा वचनमद्भुतम् ।
हर्षविस्मितसर्वाङ्गी हनुमन्तमथाब्रवीत् ॥ २८ ॥

हनुमन्दूरमध्वानं कथं मां वोढुमिच्छसि ।
तदेव खलु ते मन्ये कपित्वं हरियूथप ॥२९॥

कथं वाल्पशरीरस्त्वं मामितो नेतुमिच्छसि ।
सकाशं मानवेन्द्रस्य भर्तुर्मे प्लवगर्षभ ॥ ३० ॥

सीताया वचनं श्रुत्वा हनुमान्मारुतात्मजः ।
चिन्तयामास लक्ष्मीवान्नवं परिभवं कृतम् ॥

न मे जानाति सत्त्वं वा प्रभावं वासितेक्षणा ।
तस्मात्पश्यतु वैदेही यद्रूपं मम कामतः ॥३२॥

इति संचिन्त्य हनुमांस्तदा प्लवगसत्तमः ।
दर्शयामास वैदेह्याः स्वरूपमरिमर्दनः ॥३३।

स तस्मात्पादपाद्धीमानाप्लुत्य प्लवगर्षभः ।
ततो वर्धितुमारेभे सीताप्रत्ययकारणात् ॥३४॥

मेरुमन्दरसंकाशो बभौ दीप्तानलप्रभः ।
अग्रतो व्यवतस्थे च सीताया वानरोत्तमः ॥

हरिः पर्वतसंकाशस्ताम्रवक्त्रो महाबलः ।
वज्रदंष्ट्रनखो भीमो वैदेहीमिदमब्रवीत् ॥ ३६ ॥

सपर्वतवनोद्देशां साट्टप्राकारतोरणाम् ।
लङ्कामिमां सनाथां वा नयितुं शक्तिरस्ति मे ॥

तदवस्थाप्यतां बुद्धिरलं देवि विकाङ्क्षया ।
विशोकं कुरु वैदेहि राघवं सहलक्ष्मणम् ॥

तं दृष्ट्वाचलसंकाशमुवाच जनकात्मजा ।
पद्मपत्रविशालाक्षी मारुतस्यौरसं सुतम् ॥३९॥

तव सत्त्वं बलं चैव विजानामि महाकपे ।
वायोरिव गतिं चापि तेजश्चाग्नेरिवाद्भुतम् ॥

प्राकृतोऽन्यः कथं चेमां भूमिमागन्तुमर्हति
उदधेरप्रमेयस्य पारं वानरपुंगव ॥ ४१ ॥

जानामि गमने शक्तिं नयने चापि ते मम
अवश्यं समवधार्याशु कार्यसिद्धिर्महात्मनः ॥

अयुक्तं तु कपिश्रेष्ठ मम गन्तुं त्वया सह ।
वायुवेगसवेगस्य वेगो मां मोहयेत्तव ॥ ४३ ॥

अहमाकाशमापन्ना ह्युपर्युपरि सागरम् ।
प्रपतेयं हि ते पृष्ठाद्भयाद्वेगेन गच्छतः ॥ ४४ ॥

पतिता सागरे चाहं तिमिनक्रझषाकुले ।
भवेयमाशु विवशा यादसामन्नमुत्तमम् ॥ ४५ ॥

न च शक्ष्ये त्वया सार्धं गन्तुं शत्रुविनाशन ।
कलत्रवति संदेहस्त्वय्यपि स्यादसंशयः ॥

ह्रियमाणां तु मां दृष्ट्वा राक्षसा भीमविक्रमाः ।
अनुगच्छेयुरादिष्टा रावणेन दुरात्मना ॥४७॥

तैस्त्वं परिवृतः शूरैः शूलमुद्गरपाणिभिः।
भवेस्त्वं संशय प्राप्तो मया वीर कलत्रवान्॥

सायुधा बहवो व्योम्नि राक्षसास्त्वं निरायुधः।
कथं शक्ष्यसि संयातुं मां चैव परिरक्षितुम्॥

युध्यमानस्य रक्षोभिस्तव तैः क्रूरकर्मभिः।
प्रपतेयं हि ते पृष्ठाद्भयार्ता कपिसत्तम॥ ५०॥

अथ रक्षांसि भीमानि महान्ति बलवन्ति च।
कथंचित्सांपराये त्वां जयेयुः कपिसत्तम॥

अथ वा युध्यमानस्य पतेयं विमुखस्य ते।
पतितां च गृहीत्वा मां नयेयुः पापराक्षसाः॥

मां वा हरेयुस्त्वद्धस्ताद्विशसेयुरथापि वा।
अव्यवस्थौ हि दृश्येते युद्धे जयपराजयौ॥

अहं वापि विपद्येय रक्षोभिरभितर्जिता।
त्वत्प्रयत्नो हरिश्रेष्ठ भवेन्निष्फल एव तु॥ ५४॥

कामं त्वमसि पर्याप्तो निहन्तुं सर्वराक्षसान्।
राघवस्य यशो हीयेत्त्वया शस्तैस्तु राक्षसैः॥

अथ वादाय रक्षांसि न्यसेयुः संवृते हि माम्
यत्र ते नाभिजानीयुर्हरयो नापि राघवौ ॥

आरम्भस्तु मदर्थोऽयं ततस्तव निरर्थकः ।
त्वया हि सह रामस्य महानागमने गुणः ॥

मयि जीवितमायत्तं राघवस्य महात्मनः ।
भ्रातॄणां च महाबाहो तव राजकुलस्य च ॥

तौ निराशौ मदर्थं तु शोकसंतापकर्शितौ ।
सह सर्वर्क्षहरिभिस्त्यक्ष्यतः प्राणसंग्रहम् ॥५९॥

भर्तृभक्तिं पुरस्कृत्य रामादन्यस्य वानर ।
न स्पृशामि शरीरं तु पुंसो वानरपुंगव ॥६०॥

यदहं गात्रसंस्पर्शं रावणस्य बलाद्गता ।
अनीशा किं करिष्यामि विनाथा विवशा सती ॥

यदि रामो दशग्रीवमिह हत्वा सबान्धवम् ।
मामितो गृह्य गच्छेत तत्तस्य सदृशं भवेत् ।

श्रुता हि दृष्टाश्च मया पराक्रमा
महात्मनस्तस्य रणावमर्दिनः ।

न देवगन्धर्वभुजंगराक्षसा
भवन्ति रामेण समा हि संयुगे ॥ ६३ ॥

समीक्ष्य तं संयति चित्रकार्मुकं
महाबलं वासवतुल्यविक्रमम् ।
सलक्ष्मणं को विषहेत राघवं
हुताशनं दीप्तमिवानिलेरितम् ॥ ६४ ॥

सलक्ष्मणं राघवमाजिमर्दनं
दिशागजं मत्तमिव व्यवस्थितम् ।
सहेत को वानरमुख्य संयुगे
युगान्तसूर्यप्रतिमं शरार्चिषम् ॥ ६५ ॥

स मे हरिश्रेष्ठ सलक्ष्मणं पतिं
सयूथपं क्षिप्रमिहोपपादय ।
चिराय रामं प्रति शोककर्शितां
कुरुष्व मां वानरमुख्य हर्षिताम् ॥६६॥

इति सप्तत्रिंशः सर्गः ॥



## अष्टात्रिंशः सर्गः ।



ततः स कपिशार्दूलस्तेन वाक्येन हर्षितः ।
सीतामुवाच तच्छ्रुत्वा वाक्यं वाक्यविशारदः ॥

युक्तरूपं त्वया देवि भाषितं शुभदर्शने ।
सदृशं स्त्रीस्वभावस्य साध्वीनां विनयस्य च ॥

स्त्रीत्वं न तु समर्थं हि सागरं व्यतिवर्तितुम् ।
मामधिष्ठाय विस्तीर्णं शतयोजनमायतम् । ३॥

द्वितीयं कारणं यच्च ब्रवीषि विनयान्विते ।
रामादन्यस्य नार्हामि संस्पर्शमिति जानकि ॥

एतत्ते देवि सदृशं पत्न्यास्तस्य महात्मनः ।
का ह्यन्या त्वामृते देवि ब्रूयाद्वचनमीदृशम् ॥

श्रोष्यते चैव काकुत्स्थः सर्वं निरवशेषतः ।
चेष्टितं यत्त्वया देवि भाषितं मम चाग्रतः ॥

कारणैर्बहुभिर्देवि रामप्रियचिकीर्षया ।
स्नेहप्रस्कन्नमनसा मयैतत्समुदीरितम् ॥ ७ ॥

लङ्कायां दुष्प्रवेशत्वाद्दुस्तरत्वान्महोदधेः ।
सामर्थ्यादात्मनश्चैव मयैतत्समुदाहृतम् ॥ ८ ॥

इच्छामि त्वां समानेतुमद्यैव रघुबन्धुना ।
गुरुस्नेहेन भक्त्या च नान्यथैतदुदाहृतम् ॥९॥

यदि नोत्सहसे यातुं मया सार्धमनिन्दिते ।
अभिज्ञानं प्रयच्छ त्वं जानीयाद्राघवो हि यत् ॥

एवमुक्ता हनुमता सीता सुरसुतोपमा ।
उवाच वचनं मन्दं बाष्पप्रग्रथिताक्षरम् ॥११॥

इदं श्रेष्ठमभिज्ञानं ब्रूयास्त्वं तु मम प्रियम् ।
शैलस्य चित्रकूटस्य पादे पूर्वोत्तरे पुरा ॥१२॥

तापसाश्रमवासिन्याः प्राज्यमूलफलोदके ।
तस्मिन्सिद्धाश्रमे देशे मन्दाकिन्या ह्यदूरतः ॥

तस्योपवनषण्डेषु नानापुष्पसुगन्धिषु ।
विहृत्य सलिलक्लिन्ना तवाङ्के समुपाविशम् ॥

ततो मांससमायुक्तो वायसः पर्यतुण्डयत् ।
तमहं लोष्टमुद्यम्य वारयामि स्म वायसम् ॥

दारयन्स च मां काकस्तत्रैव परिलीयते ।
न चाप्युपारमन्मांसाद्भक्षार्थी बलिभोजनः ॥

उत्कर्षन्त्यां च रशनां क्रुद्धायां मयि पक्षिणि
स्रस्यमाने च वसने ततो दृष्टा त्वया ह्यहम् ॥

त्वयापहसिता चाहं संक्रुद्धा लज्जिता तथा ।
भक्ष्यगृध्नेन काकेन दारिता त्वामुपागता ॥१८

आसीनस्य च ते श्रान्ता पुनरुत्सङ्गमाविशम् ।
क्रुध्यन्ती च प्रहृष्टेन त्वयाहं परिसान्त्विता ॥

बाष्पपूर्णमुखी मन्दं चक्षुषी परिमार्जती ।
लक्षिताहं त्वया नाथ वायसेन प्रकोपिता ॥

परिश्रमात्प्रसुप्ता च राघवाङ्केऽप्यहं चिरम्
पर्यायेण प्रसुप्तश्च ममाङ्के भरताग्रजः ॥ २१ ॥

स तत्र पुनरेवाथ वायसः समुपागमत् ।
ततः सुप्तप्रबुद्धां मां राघवाङ्कात्समुत्थिताम् ॥

वायसः सहसागम्य विरराद स्तनान्तरे ।
पुनः पुनरथोत्पत्य विरराद स मां भृशम् ॥

ततः समुत्थितो रामो मुक्तैः शोणितबिन्दुभिः ।
वायसेन ततस्तेन बलवत्क्लिश्यमानया ॥२४॥

स मया बोधितः श्रीमान्सुखसुप्तः परंतपः ।
स मां दृष्ट्वा महाबाहुर्वितुन्नां स्तनयोस्तदा ॥

आशीविष इव क्रुद्धः श्वसन्वाक्यमभाषत ।
केन ते नागनासोरु विक्षतं वै स्तनान्तरम् ॥

कः क्रीडति सरोषेण पञ्चवक्त्रेण भोगिना ।
वीक्षमाणस्ततस्तं वै वायसं समुदैक्षत ॥ २७ ॥

नखैः सरुधिरैस्तीक्ष्णैर्मामेवाभिमुखं स्थितम्
पुत्रः किल स शक्रस्य वायसः पततां वरः ॥

धरान्तरचरः शीघ्रं पवनस्य गतौ समः ।
ततस्तस्मिन्महाबाहुः कोपसंवर्तितेक्षणः ॥२९॥

वायसे कृतवान्क्रूरां मतिं मतिमतां वरः ।
स दर्भं संस्तराद्गृह्य ब्राह्मेणास्त्रेण योजयत् ।

स दीप्त इव कालाग्निर्जज्वालाभिमुखो द्विजम् ।
स तं प्रदीप्तं चिक्षेप दर्भं तं वायसं प्रति ॥

ततस्तु वायसं दर्भः सोऽम्बरेऽनुजगाम तम् ।
अनुसृष्टस्तदा काको जगाम विविधां गतिम् ॥

त्राणकाम इमं लोकं सर्वं वै विचचार ह ।
स पित्रा च परित्यक्तः सुरैः सर्वैर्महर्षिभिः ॥

त्रीँल्लोकान्सम्परिक्रम्य तमेव शरणं गतः ।
स तं निपतितं भूमौ शरण्यः शरणागतम् ॥

वधार्हमपि काकुत्स्थ कृपया पर्यपालयत् ।
न शर्म लब्धवांल्लोके तमेव शरणं गतः ॥

परिद्यूनं विषण्णं च स तमायान्तमब्रवीत् ।
मोघं कर्तुं न शक्यं तु ब्राह्ममस्त्रं तदुच्यताम् ॥

हिनस्तु दक्षिणाक्षि त्वच्छर इत्यथ सोऽब्रवीत् ।
ततस्तस्याक्षि काकस्य हिनस्ति स्म स दक्षिणम् ॥

दत्त्वा स दक्षिणं नेत्रं प्राणेभ्यः परिरक्षितः ।
स रामाय नमस्कृत्वा राज्ञे दशरथाय च ॥

विसृष्टस्तेन वीरेण प्रतिपेदे स्वमालयम् ।
मत्कृते काकमात्रे तु ब्रह्मास्त्रं समुदीरितम् ॥

कस्माद्यो मां हरेत्त्वत्तः क्षमसे तं महीपते ।
स कुरुष्व महोत्साहः कृपां मयि नरर्षभ ॥

त्वया नाथवती नाथ ह्यनाथेव हि दृश्यते ।
आनृशंस्यं परो धर्मस्त्वत्त एव मया श्रुतः ॥

जानामि त्वां महावीर्यं महोत्साहं महाबलम् ।
अपारपारमक्षोभ्यं गाम्भीर्यात्सागरोपमम् ॥

भर्तारं ससमुद्राया धरण्या वासवोपमम् ।
एवमस्त्रविदां श्रेष्ठ सत्यवान्बलवानपि ॥ ४३ ॥

किमर्थमस्त्रं रक्षःसु न योजयसि राघव ।
न नागा नापि गन्धर्वा नासुरा न मरुद्गणाः ॥

रामस्य समरे वेगं शक्ताः प्रतिसमाधितुम् ।
तस्य वीर्यवतः कश्चिद्यद्यस्ति मयि संभ्रमः ॥

किमर्थं न शरैस्तीक्ष्णैः क्षयं नयति राक्षसान् ।
भ्रातुरादेशमादाय लक्ष्मणो वा परंतपः ॥ ४६ ॥

कस्य हेतोर्न मां वीरः परित्राति महाबलः ।
यदि तौ पुरुषव्याघ्रौ वाय्वग्निसमतेजसौ ॥

सुराणामपि दुर्धर्षौ किमर्थं मामुपेक्षतः
ममैव दुष्कृतं किंचिन्महदस्ति न संशयः ।

समर्थावपि तौ यन्मां नावेक्षेते परंतपौ ।
वैदेह्या वचनं श्रुत्वा करुणं साश्रु भाषितम्

अथाब्रवीन्महातेजा हनूमान्मारुतात्मजः ।
त्वच्छोकविमुखो रामो देवि सत्येन मे शपे ॥

रामे दु खाभिपन्ने च लक्ष्मणः परितप्यते
कथंचिद्भवती दृष्टा न कालः परिशोचितुम् ॥

इमं मुहूर्तं दुःखानां द्रक्ष्यस्यन्तमनिन्दिते ।
तावुभौ पुरुषव्याघ्रौ राजपुत्रौ महाबलौ

त्वद्दर्शनकृतोत्साहौ लङ्कां भस्मीकरिष्यतः ।
हत्वा च समरे क्रूरं रावणं सहबान्धवम् ॥

राघवस्त्वां विशालाक्षि नेष्यति स्वां पुरीं प्रति
ब्रूहि यद्राघवो वाच्यो लक्ष्मणश्च महाबलः ।

सुग्रीवो वापि तेजस्वी हरयोऽपि समागताः ।
इत्युक्तवति तस्मिंश्च सीता सुरसुतोपमा ॥५५॥

उवाच शोकसंतप्ता हनुमन्तं प्लवंगमम्।
कौसल्या लोकभर्तारं सुषुवे यं मनस्विनी॥

तं ममार्थे सुखं पृच्छ शिरसा चाभिवादय।
स्रजश्च सर्वरत्नानि प्रिया याश्च वराङ्गनाः॥

ऐश्वर्यं च विशालायां पृथिव्यामपि दुर्लभम्।
पितरं मातरं चैव संमान्याभिप्रसाद्य च॥

अनुप्रव्रजितो रामं सुमित्रा येन सुप्रजाः।
आनुकूल्येन धर्मात्मा त्यक्त्वा सुखमनुत्तमम्॥

अनुगच्छति काकुत्स्थं भ्रातरं पालयन्वने।
सिंहस्कन्धो महाबाहुर्मनस्वी प्रियदर्शनः॥

पितृवद्वर्तते रामे मातृवन्मां समाचरन्।
ह्रियमाणां तदा वीरो न तु मां वेद लक्ष्मणः॥

वृद्धोपसेवी लक्ष्मीवाञ्शक्तो न बहु भाषिता।
राजपुत्रः प्रियः श्रेष्ठः सदृशः श्वशुरस्य मे॥

मत्तः प्रियतरो नित्यं भ्राता रामस्य लक्ष्मणः।
नियुक्तो धुरि यस्यां तु तामुद्वहति वीर्यवान्॥

यं दृष्ट्वा राघवो नैव वृत्तमार्यमनुस्मरेत् ।
स ममार्थाय कुशलं वक्तव्यो वचनान्मम ॥

मृदुर्नित्यं शुचिर्दक्षः प्रियो रामस्य लक्ष्मणः ।
यथा हि वानरश्रेष्ठ दुःखक्षयकरो भवेत् ॥

त्वमस्मिन्कार्यनिर्योगे प्रमाणं हरिसत्तम ।
राघवस्त्वत्समारम्भान्मयि यत्नपरो भवेत् ॥

इदं ब्रूयाश्च मे नाथं शूरं रामं पुनः पुनः ।
जीवितं धारयिष्यामि मासं दशरथात्मज ॥

ऊर्ध्वं मासान्न जीवेयं सत्येनाहं ब्रवीमि ते ।
रावणेनोपरुद्धां मां निकृत्या पापकर्मणा ॥

त्रातुमर्हसि वीर त्वं पातालादिव कौशिकीम् ।
ततो वस्त्रगतं मुक्त्वा दिव्यं चूडामणिं शुभम् ॥

प्रदेयो राघवायेति सीता हनुमते ददौ ।
प्रतिगृह्य ततो वीरो मणिरत्नमनुत्तमम् ॥७०॥

अङ्गुल्या योजयामास न ह्यस्य प्राभवद्भुजः ।
मणिरत्नं कपिवरः प्रतिगृह्याभिवाद्य च ॥७१॥

सीतां प्रदक्षिणं कृत्वा प्रणतः पार्श्वतः स्थितः ।
हर्षेण महता युक्तः सीतादर्शनजेन सः ।
हृदयेन गतो रामं शरीरेण तु निष्ठितः ॥७२॥

मणिवरमुपगृह्य तं महार्हं
जनकनृपात्मजया धृतं प्रभावात् ।
गिरिरिव पवनावधूतमुक्तः
सुखितमनाः प्रतिसंक्रमं प्रपेदे ॥ ७३ ॥

इति अष्टात्रिंशः सर्गः ॥

---

## एकोनचत्वारिंशः सर्गः ॥

—*—

मणिं दत्वा ततः सीता हनुमन्तमथाब्रवीत् ।
अभिज्ञानमभिज्ञातमेतद्रामस्य तत्त्वतः ॥ १ ॥

मणिं तु दृष्ट्वा रामो वै त्रयाणां संस्मरिष्यति ।
वीरो जनन्या मम च राज्ञो दशरथस्य च ॥

स भूयस्त्वं समुत्साहे चोदितो हरिसत्तम ।
अस्मिन्कार्यसमारम्भे प्रचिन्तय यदुत्तरम् ॥

त्वमस्मिन्कार्यनिर्योगे प्रमाणं हरिसत्तम ।
हनुमन्यत्नमास्थाय दुःखक्षयकरो भव ॥ ४ ॥

तस्य चिन्तयतो यत्नो दुःखक्षयकरो भवेत् ।
स तथेति प्रतिज्ञाय मारुतिर्भीमविक्रमः ॥ ५ ॥

शिरसावन्द्य वैदेहीं गमनायोपचक्रमे ।
ज्ञात्वा सम्प्रस्थितं देवी वानरं मारुतात्मजम् ॥

बाष्पगद्गदया वाचा मैथिली वाक्यमब्रवीत् ।
कुशलं हनुमन्ब्रूयाः सहितौ रामलक्ष्मणौ ॥

सुग्रीवं च सहामात्यं वृद्धान्सर्वांश्च वानरान् ।
ब्रूयास्त्वं वानरश्रेष्ठ कुशलं धर्मसंहितम् ॥ ८ ॥

यथा स च महाबाहुर्मां तारयति राघवः ।
अस्माद्दुःखाम्बुसंरोधात्त्वं समाधातुमर्हसि ॥

जीवन्तीं मां यथा रामः सम्भावयति कीर्तिमान् ।
तत्त्वया हनुमन्वाच्यं वाचा धर्ममवाप्नुहि ॥

नित्यमुत्साहयुक्ताश्च वाचः श्रुत्वा त्वयेरिताः ।
वर्धिष्यते दाशरथेः पौरुषं मदवाप्तये ॥ ११ ॥

मत्संदेशयुता वाचस्त्वत्तः श्रुत्वैव राघवः ।
पराक्रमविधिं वीरो विधिवत्संविधास्यति ॥

सीताया वचनं श्रुत्वा हनुमान्मारुतात्मजः ।
शिरस्यञ्जलिमाधाय वाक्यमुत्तरमब्रवीत् ॥

क्षिप्रमेष्यति काकुत्स्थो हर्यृक्षप्रवरैर्वृतः ।
यस्ते युधि विजित्यारीञ्शोकं व्यपनयिष्यति ॥

न हि पश्यामि मर्त्येषु नामरेष्वसुरेषु वा ।
यस्तस्य क्षिपतो बाणान्स्थातुमुत्सहतेऽग्रतः ॥

अप्यर्कमपि पर्जन्यमपि वैवस्वतं यमम् ।
स हि सोढुं रणे शक्तस्तव हेतोर्विशेषतः ॥

स हि सागरपर्यन्तां महीं शासितुमीहते ।
त्वन्निमित्तो हि रामस्य जयो जनकनन्दिनि ॥

तस्य तद्वचनं श्रुत्वा सम्यक्सत्यं सुभाषितम् ।
जानकी बहु मेनेऽथ वचनं चेदमब्रवीत् ॥१८॥

ततस्तं प्रस्थितं सीता वीक्षमाणा पुनः पुनः ।
भर्तृस्नेहान्वितं वाक्यं सौहार्दादनुमानयत् ॥

यदि वा मन्यसे वीर वसैकाहमरिंदम ।
कस्मिंश्चित्संवृते देशे विश्रान्तः श्वो गमिष्यसि ॥

मम चेदल्पभाग्यायाः सांनिध्यात्तव वानर ।
अस्य शोकस्य महतो मुहूर्तं मोक्षणं भवेत् ॥

गते हि हरिशार्दूल पुनरागमनाय तु ।
प्राणानामपि संदेहो मम स्यान्नात्र संशयः ॥

तवादर्शनजः शोको भूयो मां परितापयेत् ।
दुःखाद्दुःखपरामृष्टां दीपयन्निव वानर ॥२४॥

अयं च वीर संदेहस्तिष्ठतीव ममाग्रतः ।
सुमहांस्त्वत्सहायेषु हर्यृक्षेषु हरीश्वर ॥ २४ ॥

कथं नु खलु दुष्पारं तरिष्यन्ति महोदधिम् ।
तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥

त्रयाणामेव भूतानां सागरस्यास्य लङ्घने ।
शक्तिः स्याद्वैनतेयस्य तव वा मारुतस्य वा ॥

तदस्मिन्कार्यनिर्योगे वीरैवं दुरतिक्रमे ।
किं पश्यसि समाधानं त्वं हि कार्यविदां वरः ॥

काममस्य त्वमेवैकः कार्यस्य परिसाधने ।
पर्याप्तः परवीरघ्न यशस्यस्ते बलोदयः ॥ २८ ॥

बलैः समग्रैर्यदि मां रावणं जित्य संयुगे ।
विजयी स्वपुरीं यायात्तत्तु मे स्याद्यशस्करम् ॥

शरैस्तु सङ्कुलां कृत्वा लङ्कां परबलार्दनः ।
मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥

तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः ।
भवेदाहवशूरस्य तथा त्वमुपपादय ॥ ३१ ॥

तदर्थोपहितं वाक्यं सहितं हेतुसंहितम् ।
निशम्य हनुमाञ्शेषं वाक्यमुत्तरमब्रवीत् ॥

देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः ।
सुग्रीवः सत्त्वसम्पन्नस्तवार्थे कृतनिश्चयः ॥३३॥

स वानरसहस्राणां कोटीभिरभिसंवृतः ।
क्षिप्रमेष्यति वैदेहि राक्षसानां निबर्हणः ॥

तस्य विक्रमसंपन्नाः सत्त्ववन्तो महाबलाः ।
मनः संकल्पसंपाता निदेशे हरयः स्थिताः ॥

येषां नोपरि नाधस्तान्न तिर्यक्सज्जते गतिः
न च कर्मसु सीदन्ति महत्स्वमिततेजसः ॥

असकृत्तैर्महोत्साहैः ससागरधराधरा ।
प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः ॥

मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः ।
मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसन्निधौ ॥

अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः
न हि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः ॥

तदलं परितापेन देवि शोको व्यपैतु ते ।
एकोत्पातेन ते लङ्कामेष्यन्ति हरियूथपाः ॥

मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ
त्वत्सकाशं महासत्त्वौ नृसिंहावागमिष्यतः ॥

तौ हि वीरौ नरवरौ सहितौ रामलक्ष्मणौ ।
आगम्य नगरीं लङ्कां सायकैर्विधमिष्यतः ॥

सगणं रावणं हत्वा राघवो रघुनन्दनः
त्वामादाय वरारोहे स्वपुरं प्रतियास्यति ॥

तदाश्वासिहि भद्रं ते भव त्वं कालकाङ्क्षिणी ।
न चिराद्द्रक्ष्यसे राम प्रज्वलन्तमिवानलम् ॥

निहते राक्षसेन्द्रेऽस्मिन्सपुत्रामात्यबान्धवे ।
त्वं समेष्यसि रामेण शशाङ्केनेव रोहिणी ॥

क्षिप्रं त्वं देवि शोकस्य पारं यास्यसि मैथिलि ।
रावणं चैव रामेण निहतं द्रक्ष्यसेऽचिरात् ॥

एवमाश्वास्य वैदेहीं हनुमान्मारुतात्मजः ।
गमनाय मतिं कृत्वा वैदेहीं पुनरब्रवीत् ॥४७॥

तमरिघ्नं कृतात्मानं क्षिप्रं द्रक्ष्यसि राघवम् ।
लक्ष्मणं च धनुष्पाणिं लङ्काद्वारमुपस्थितम् ॥

नखदंष्ट्रायुधान्वीरान्सिंहशार्दूलविक्रमान् ।
वानरान्वारणेन्द्राभान्क्षिप्रं द्रक्ष्यसि संगतान् ॥

शैलाम्बुदनिकाशानां लङ्कामलयसानुषु ।
नर्दतां कपिमुख्यानामचिराच्छ्रोष्यसि स्वनम् ॥

स तु मर्मणि घोरेण ताडितो मन्मथेषुणा ।
न शर्म लभते रामः सिंहार्दित इव द्विपः ॥

मा रुदो देवि शोकेन मा भूत्ते मनसोऽप्रियम् ।
शचीव पत्या शक्रेण भर्त्रा नाथवती ह्यसि ॥

रामाद्विशिष्टः कोऽन्योऽस्ति कश्चित्सौमित्रिणा
समः ।
अग्निमारुतकल्पौ तौ भ्रातरौ तव संश्रयौ ॥

नास्मिंश्चिरं वत्स्यसि देवि देशे
रक्षोगणैरध्युषितेऽतिरौद्रे ।
न ते चिरादागमनं प्रियस्य
क्षमस्व मत्संगमकालमात्रम् ॥ ५४ ॥

इति एकोनचत्वारिंश सर्ग ॥



## चत्वारिंशः सर्गः ॥

श्रुत्वा तु वचनं तस्य वायुसूनोर्महात्मनः ।
उवाचात्महितं वाक्यं सीता सुरसुतोपमा ॥ १ ॥

त्वां दृष्ट्वा प्रियवक्तारं संप्रहृष्यामि वानर ।
अर्धसंजातसस्येव वृष्टिं प्राप्य वसुंधरा ॥ २ ॥

यथा तं पुरुषव्याघ्र गात्रैः शोकाभिकर्शितैः ।
संस्पृशेय सकामाहं तथा कुरु दयां मयि ॥

अभिज्ञानं च रामस्य दद्या हरिगणोत्तम ।
क्षिप्तामिषीकां काकस्य कोपादेकाक्षिशातनीम् ॥

मनःशिलायास्तिलको गण्डपार्श्वे निवेशितः ।
त्वया प्रणष्टे तिलके तं किल स्मर्तुमर्हसि ॥

स वीर्यवान्कथं सीतां हृतां समनुमन्यसे ।
वसन्तीं रक्षसां मध्ये महेन्द्रवरुणोपमः ॥ ६ ॥

एष चूडामणिर्दिव्यो मया सुपरिरक्षितः ।
एतं दृष्ट्वा प्रहृष्यामि व्यसने त्वामिवानघ ॥

एष निर्यातितः श्रीमान्मया ते वारिसंभवः ।
अतः परं न शक्ष्यामि जीवितुं शोकलालसा ॥

असह्यानि च दुःखानि वाचश्च हृदयच्छिदः ।
राक्षसीनां सुघोराणां त्वत्कृते मर्षयाम्यहम् ॥

धारयिष्यामि मासं तु जीवितं शत्रुसूदन ।
मासादूर्ध्वं न जीविष्ये त्वया हीना नृपात्मज ॥

घोरो राक्षसराजोऽयं दृष्टिश्च न शुभा मयि ।
त्वां च श्रुत्वा विषज्जन्तं न जीवेयमहं क्षणम् ॥

वैदेह्या वचनं श्रुत्वा करुणं साधु भाषितम् ।
अथाब्रवीन्महातेजा हनुमान्मारुतात्मजः ॥

त्वच्छोकविमुखो रामो देवि सत्येन ते शपे ।
रामे दुःखाभिभूते तु लक्ष्मणः परितप्यते ॥

कथंचिद्भवती दृष्टा न कालः परिशोचितुम् ।
इमं मुहूर्तं दुःखानामन्तं द्रक्ष्यसि भामिनि ॥

तावुभौ पुरुषव्याघ्रौ राजपुत्रावरिंदमौ ।
त्वद्दर्शनकृतोत्साहौ लङ्कां भस्मीकरिष्यतः ॥

हत्वा तु समरे क्रूरं रावणं सबान्धवम् ।
राघवौ त्वां विशालाक्षि स्वां पुरीं प्रापयिष्यतः ॥

यत्तु रामो विजानीयादभिज्ञानमनिन्दिते ।
प्रीतिसंजननं तस्य भूयस्त्वं दातुमर्हसि ॥१७॥

साब्रवीद्दत्तमेवेति मयाभिज्ञानमुत्तमम् ।
एतदेव हि रामस्य दृष्ट्वा मत्केशभूषणम् ॥

अद्येव हनुमन्वाक्यं तव वीर भविष्यति ।
स तं मणिवरं गृह्य श्रीमान्प्लवगसत्तमः ॥१९॥

प्रणम्य शिरसा देवीं गमनायोपचक्रमे ।
समुत्पातकृतोत्साहमवेक्ष्य हरिपुंगवम् ॥ २० ॥

वर्धमानं महावेगमुवाच जनकात्मजा ।
अश्रुपूर्णमुखी दीना बाष्पगद्गदया गिरा ॥

हनुमन्सिंहसंकाशौ भ्रातरौ रामलक्ष्मणौ ।
सुग्रीवं च सहामात्यं सर्वान्ब्रूया ह्यनामयम् ॥

यथा च स महाबाहुर्मां तारयति राघवः ।
अस्माद्दुःखाम्बुसंरोधात्त्वं समाधातुमर्हसि ॥

इमं च तीव्रं मम शोकवेगं
रक्षोभिरेभिः परिभर्त्सनं च ।
ब्रूयास्तु रामस्य गतः समीपं
शिवश्च तेऽध्वास्तु हरिप्रवीर ॥ २४ ॥

स राजपुत्र्या प्रतिवेदितार्थः
कपिः कृतार्थः परिहृष्टचेताः ।

अल्पावशेषं प्रसमीक्ष्य कार्यं
दिशं ह्युदीचीं मनसा जगाम ॥ २५ ॥

इति चत्वारिंशः सर्गः ॥



## एकचत्वारिंशः सर्गः ॥



स च वाग्भिः प्रशस्ताभिर्गमिष्यन्पूजितस्तया ।
तस्माद्देशादपक्रम्य चिन्तयामास वानरः ॥१॥

अल्पशेषमिदं कार्यं दृष्टेयमसितेक्षणा ।
त्रीनुपायानतिक्रम्य चतुर्थ इह दृश्यते ॥ २ ॥

न साम रक्षःसु गुणाय कल्पते
न दानमर्थोपचितेषु युज्यते ।
न भेदसाध्या बलदर्पिता जनाः
पराक्रमस्त्वेव ममेह रोचते ॥ ३ ॥

न चास्य कार्यस्य पराक्रमादृते
विनिश्चयः कश्चिदिहोपपद्यते ।

हतप्रवीरास्तु रणे हि राक्षसाः
कथंचिदीयुर्यदिहाद्य मार्दवम् ॥ ४ ॥

कार्ये कर्मणि निर्दिष्टे यो बहून्यपि साधयेत्।
पूर्वकार्याविरोधेन स कार्यं कर्तुमर्हति ॥ ५ ॥

न ह्येकः साधको हेतुः स्वल्पस्यापीह कर्मणः।
यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने ॥६॥

इहैव तावत्कृतनिश्चयो ह्यह
यदि व्रजेयं प्लवगेश्वरालयम्।
परात्मसंमर्दविशेषतत्त्ववि-
त्ततः कृतं स्यान्मम भर्तृशासनम् ॥ ७ ॥

कथ नु खल्वद्य भवेत्सुखागत
प्रसह्य युद्ध मम राक्षसैः सह।
तथैव खल्वात्मबलं च सारव-
त्समानयेन्मां च रणे दशाननः ॥ ८ ॥

ततः समासाद्य रणे दशाननं
समन्त्रिवर्गं सबलप्रयायिनम्।

हृदि स्थितं तस्य मतं बलं च वै
सुखेन मत्वाहमितः पुनर्व्रजे ॥ ९ ॥

इदमस्य नृशंसस्य नन्दनोपममुत्तमम् ।
वनं नेत्रमनःकान्तं नानाद्रुमलतायुतम् ॥ १० ॥

इदं विध्वंसयिष्यामि शुष्कं वनमिवानलः ।
अस्मिन्भग्ने ततः कोपं करिष्यति दशाननः ॥

ततो महत्साश्वमहारथद्विपं
बलं समादेक्ष्यति राक्षसाधिपः ।
त्रिशूलकालायसपट्टसायुधं
ततो महद्युद्धमिदं भविष्यति ॥ १२ ॥

अहं तु तैः संयति चण्डविक्रमैः
समेत्य रक्षोभिरसह्यविक्रमः ।
निहत्य तद्रावणचोदितं बलं
सुखं गमिष्यामि कपीश्वरालयम् ॥

ततो मारुतवत्क्रुद्धो मारुतिर्भीमविक्रमः ।
ऊरुवेगेन महता द्रुमान्क्षेप्तुमथारभत् ॥

ततस्तु हनुमान्वीरो बभञ्ज प्रमदावनम् ।
मत्तद्विजसमाघुष्टं नानाद्रुमलतायुतम् ॥ १५ ॥

तद्वनं मथितैर्वृक्षैर्भिन्नैश्च सलिलाशयैः ।
चूर्णितैः पर्वताग्रैश्च बभूवाप्रियदर्शनम् ॥ १६ ॥

नानाशकुन्तविरुतैः प्रभिन्नैः सलिलाशयैः ।
ताम्रैः किसलयैः क्लान्तैः क्लान्तद्रुमलतायुतम् ॥

न बभौ तद्वनं तत्र दावानलहतं यथा ।
व्याकुलावरणा रेजुर्विह्वला इव ता लताः ॥

लतागृहैश्चित्रगृहैश्च नाशितै-
   र्महोरगैर्व्यालमृगैश्च निर्धुतैः ।
शिलागृहैरुन्मथितैस्तथा गृहैः
   प्रणष्टरूपं तदभून्महद्वनम् ॥ १९ ॥

सा विह्वलाशोकलताप्रताना
   वनस्थली शोकलताप्रताना ।
जाता दशास्यप्रमदावनस्य
   कपेर्बलाद्धि प्रमदावनस्य ॥ २० ॥

स तस्य कृत्वार्थपतेर्महाकपि-
र्महद्व्यलीकं मनसो महात्मनः ।
युयुत्सुरेको बहुभिर्महाबलैः
श्रिया ज्वलंस्तोरणमाश्रितः कपिः

इति एकचत्वारिंश सर्ग ॥

## द्विचत्वारिंशः सर्गः ॥

ततः पक्षिनिनादेन वृक्षभङ्गस्वनेन च ।
बभूवुस्त्राससम्भ्रान्ताः सर्वे लङ्कानिवासिनः ॥

विद्रुताश्च भयत्रस्ता विनेदुर्मृगपक्षिणः ।
रक्षसां च निमित्तानि क्रूराणि प्रतिपेदिरे ।

ततो गतायां निद्रायां राक्षस्यो विकृताननाः ।
तद्वनं ददृशुर्भग्नं तं च वीरं महाकपिम् ॥

स ता दृष्ट्वा महाबाहुर्महासत्त्वो महाबलः ।
चकार सुमहद्रूपं राक्षसीनां भयावहम् ॥

ततस्तं गिरिसंकाशमतिकायं महाबलम् ।
राक्षस्यो वानरं दृष्ट्वा पप्रच्छुर्जनकात्मजाम् ॥

कोऽयं कस्य कुतो वायं किंनिमित्तमिहागतः ।
कथं त्वया सहानेन संवादः कृत इत्युत ॥ ६ ॥

आचक्ष्व नो विशालाक्षि मा भूत्ते सुभगे भयम् ।
संवादमसितापाङ्गे त्वया किं कृतवानयम् ॥

अथाब्रवीत्तदा साध्वी सीता सर्वाङ्गसुन्दरी ।
रक्षसां भीमरूपाणां विज्ञाने मम का गतिः ॥

यूयमेवाभिजानीत योऽयं यद्वा करिष्यति ।
अहिरेव ह्यहेः पादान्विजानाति न संशयः ॥

अहमप्यस्य भीतास्मि नैनं जानामि कोन्वयम् ।
वेद्मि राक्षसमेवैनं कामरूपिणमागतम् ॥ १० ॥

वैदेह्या वचनं श्रुत्वा राक्षस्यो विद्रुता दिशः ।
स्थिताः काश्चिद्गताः काश्चिद्रावणाय निवेदितुम् ॥

रावणस्य समीपे तु राक्षस्यो विकृताननाः ।
विरूपं वानरं भीममाख्यातुमुपचक्रमुः ॥ १२ ॥

अशोकवनिकामध्ये राजन्भीमवपुः कपिः ।
सीतया कृतसंवादस्तिष्ठत्यमितविक्रमः ॥ १३ ॥

न च तं जानकी सीता हरिं हरिणलोचना ।
अस्माभिर्बहुधा पृष्टा निवेदयितुमिच्छति ॥

वासवस्य भवेद्दूतो दूतो वैश्रवणस्य वा ।
प्रेषितो वापि रामेण सीतान्वेषणकाङ्क्षया ॥

तेन त्वद्भुतरूपेण यत्तत्तव मनोहरम् ।
नानामृगगणाकीर्णं प्रमृष्टं प्रमदावनम् ॥ १६ ॥

न तत्र कश्चिदुद्देशो यस्तेन न विनाशितः ।
यत्र सा जानकी सीता स तेन न विनाशितः ॥

जानकीरक्षणार्थं वा श्रमाद्वा नोपलभ्यते ।
अथ वा कः श्रमस्तस्य सैव तेनाभिरक्षिता ॥

चारुपल्लवपुष्पाढ्यं यं सीता स्वयमास्थिता ।
प्रवृद्धः शिंशपावृक्षः स च तेनाभिरक्षितः ॥

तस्योग्ररूपस्योग्र त्वं दण्डमाज्ञातुमर्हसि ।
सीता संभाषिता येन तद्वनं च विनाशितम् ॥

मनःपरिगृहीतां तां तव रक्षोगणेश्वर ।
कः सीतामभिभाषेत यो न स्यात्त्यक्तजीवितः ॥

राक्षसीनां वचः श्रुत्वा रावणो राक्षसेश्वरः ।
हुताग्निरिव जज्वाल कोपसंवर्तितेक्षणः ॥२२॥

तस्य क्रुद्धस्य नेत्राभ्यां प्रापतन्नास्रबिन्दवः ।
दीप्ताभ्यामिव दीपाभ्यां सार्चिषः स्नेहबिन्दवः ॥

आत्मनः सदृशाञ्छूरान्किंकरान्नाम राक्षसान्
व्यादिदेश महातेजा निग्रहार्थं हनूमतः ॥२४॥

तेषामशीतिसाहस्रं किंकराणां तरस्विनाम् ।
निर्ययुर्भवनात्तस्मात्कूटमुद्गरपाणयः ॥ २५ ॥

महोदरा महादंष्ट्रा घोररूपा महाबलाः ।
युद्धाभिमनसः सर्वे हनुमद्ग्रहणोन्मुखाः ॥२६॥

ते कपिं तं समासाद्य तोरणस्थमवस्थितम् ।
अभिपेतुर्महावेगाः पतंगा इव पावकम् ॥२७॥

ते गदाभिर्विचित्राभिः परिघैः काञ्चनाङ्गदैः ।
आजघ्नुर्वानरश्रेष्ठं शरैश्चादित्यसंनिभैः ॥२८॥

मुद्गरैः पट्टिशैः शूलैः प्रासतोमरशक्तिभिः ।
परिवार्य हनूमन्तं सहसा तस्थुरग्रतः ॥ २९ ॥

हनुमानपि तेजस्वी श्रीमान्पर्वतसंनिभः ।
क्षितावाविध्य लाङ्गूलं ननाद च महास्वनम् ॥

स भूत्वा सुमहाकायो हनुमान्मारुतात्मजः ।
धृष्टमास्फोटयामास लङ्कां शब्देन पूरयन् ॥ ३१ ॥

तस्यास्फोटितशब्देन महता सानुनादिना ।
पेतुर्विहंगा गगनादुच्चैश्चेदमघोषयत् ॥ ३२ ॥

जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥

दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः ।
हनुमाञ्शत्रुसैन्यानां निहन्ता मारुतात्मजः ॥

न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् ।
शिलाभिस्तु प्रहरतः पादपैश्च पुनः पुनः ॥

अर्दयित्वा पुरीं लङ्कामभिवाद्य च मैथिलीम् ।
समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम् ॥

तस्य संनादशब्देन तेऽभवन्भयशङ्किताः ।
ददृशुश्च हनूमन्तं संध्यामेघमिवोन्नतम् ॥ ३७ ॥

स्वामिसंदेशनिःशङ्कास्ततस्ते राक्षसाः कपिम् ।
चित्रैः प्रहरणैर्भीमैरभिपेतुः सहस्रशः ॥ ३८ ॥

स तैः परिवृतः शूरैः सर्वतः स महाबलः ।
आससादायसं भीमं परिघं तोरणाश्रितम् ॥

स तं परिघमादाय जघान च निशाचरान् ।
स पन्नगमिवादाय स्फुरन्तं विनतासुतः ॥ ४० ॥

विचचाराम्बरे वीरः परिगृह्य च मारुतिः ।
स हत्वा राक्षसान्वीरान्किंकरान्मारुतात्मजः ॥

युद्धकाङ्क्षी पुनर्वीरस्तोरणं समुपाश्रितः ।
ततस्तस्माद्भयान्मुक्ताः कतिचित्तत्र राक्षसाः ।
निहतान्किंकरान्सर्वान्रावणाय न्यवेदयन् ॥

स राक्षसानां निहतं महद्बलं
निशम्य राजा परिवृत्तलोचनः ।

समादिदेशाप्रतिमं पराक्रमे
प्रहस्तपुत्रं समरे सुदुर्जयम् ॥ ४६ ॥

इति द्विचत्वारिंशः सर्गः ॥



## त्रिचत्वारिंशः सर्गः ॥



ततः स किंकरान्हत्वा हनुमान्ध्यानमास्थितः ।
वनं भग्नं मया चैत्यप्रासादो न विनाशितः ॥

तस्मात्प्रासादमप्येवमिमं विध्वंसयाम्यहम् ।
इति संचिन्त्य मनसा हनुमान्दर्शयन्बलम् ॥

चैत्यप्रासादमाप्लुत्य मेरुशृङ्गमिवोन्नतम् ।
आरुरोह हरिश्रेष्ठो हनुमान्मारुतात्मजः ॥ ३ ॥

आरुह्य गिरिसंकाशं प्रासादं हरियूथपः ।
बभौ स सुमहातेजाः प्रतिसूर्य इवोदितः ॥ ४ ॥

संप्रधृष्य च दुर्धर्षं चैत्यप्रासादमुत्तमम् ।
हनुमान्प्रज्वलँल्लक्ष्म्या पारियात्रोपमोऽभवत् ॥

स भूत्वा सुमहाकायः प्रभावान्मारुतात्मजः ।
धृष्टमास्फोटयामास लङ्कां शब्देन पूरयन् ॥

तस्यास्फोटितशब्देन महता श्रोत्रघातिना ।
पेतुर्विहङ्गमास्तत्र चैत्यपालाश्च मोहिताः ॥ ७ ॥

अस्त्रविज्जयतां रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥

दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः ।
हनुमाञ्छत्रुसैन्यानां निहन्ता मारुतात्मजः ॥

न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् ।
शिलाभिस्तु प्रहरतः पादपैश्च सहस्रशः ॥ १० ॥

अर्दयित्वा पुरीं लङ्कामभिवाद्य च मैथिलीम् ।
समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम् ॥

एवमुक्त्वा महाबाहुश्चैत्यस्थो हरियूथपः ।
ननाद भीमनिर्ह्रादो रक्षसां जनयन्भयम् ॥

तेन शब्देन महता चैत्यपालाः शतं ययुः ।
गृहीत्वा विविधानस्त्रान्प्रासान्खड्गान्परश्वधान् ।

विसृजन्तो महाकाया मारुतिं पर्यवारयन् ।
ते गदाभिर्विचित्राभिः परिघैः काञ्चनाङ्गदैः ॥

आजघ्नुर्वानरश्रेष्ठं बाणैश्चादित्यसंनिभैः ।
आवर्त इव गङ्गायास्तोयस्य विपुलो महान् ॥

परिक्षिप्य हरिश्रेष्ठं स बभौ रक्षसां गणः ।
ततो वातात्मजः क्रुद्धो भीमरूपं समास्थितः ॥

प्रासादस्य महान्तस्य स्तम्भं हेमपरिष्कृतम् ।
उत्पाटयित्वा वेगेन हनुमान्पवनात्मजः ॥१७॥

ततस्तं भ्रामयामास शतधारं महाबलः ।
तत्र चाग्निः समभवत्प्रासादश्चाप्यदह्यत ॥१८॥

दह्यमानं ततो दृष्ट्वा प्रासादं हरियूथपः ।
स राक्षसशतं हत्वा वज्रेणेन्द्र इवासुरान् ॥

अन्तरिक्षे स्थितः श्रीमानिदं वचनमब्रवीत् ।
मादृशानां सहस्राणि विसृष्टानि महात्मनाम् ॥

बलिनां वानरेन्द्राणां सुग्रीववशवर्तिनाम् ।
अटन्ति वसुधां कृत्स्नां वयमन्ये च वानराः ॥

दशनागबलाः केचित्केचिद्दशगुणोत्तराः ।
केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः ॥

सन्ति चौघबलाः केचित्केचिद्वायुबलोपमाः ।
अप्रमेयबलाश्चान्ये तत्रासन्हरियूथपाः ॥ ३ ॥

ईदृग्विधैस्तु हरिभिर्वृतो दन्तनखायुधैः ।
शतैः शतसहस्रैश्च कोटीभिरयुतैरपि ॥ २४ ॥

आगमिष्यति सुग्रीवः सर्वेषां वो निषूदनः ।
नेयमस्ति पुरी लङ्का न यूयं न च रावणः ।
यस्मादिक्ष्वाकुनाथेन बद्धं वैरं महात्मना ॥

इति त्रिचत्वारिंशः सर्गः ॥



चतुश्चत्वारिंशः सर्गः ॥



संदिष्टो राक्षसेन्द्रेण प्रहस्तस्य सुतो बली ।
जम्बुमाली महादंष्ट्रो निर्जगाम धनुर्धरः ॥१॥

रक्तमाल्याम्बरधरः स्रग्वी रुचिरकुण्डलः
महान्विवृत्तनयनश्चण्डः समरदुर्जयः ॥ २ ॥

दग्धभिन्नकूटप्रतिमो महाजलदसंनिभः ।
महाभुजशिरस्कन्धो महादंष्ट्रो महाननः ॥ ३ ॥

महाजवो महोत्साहो महासत्त्वोरुविक्रमः ।
आजगामातिवेगेन सायुधः स महारथः ॥ ४ ॥

धनुः शक्रधनुःप्रख्यं महद्रुचिरसायकम् ।
विस्फारयाणो वेगेन वज्राशनिसमस्वनम् ॥ ५ ॥

तस्य विस्फारघोषेण धनुषो महता दिशः ।
प्रदिशश्च नभश्चैव सहसा समपूर्यत ॥ ६ ॥

उदयस्थ इवादित्यः प्रभाभिरतिलोहितः ।
लोहिताङ्गेन महता कवचेनाभिसंवृतः ॥ ७ ॥

तिष्ठ तिष्ठेति सहसा हनूमन्तमथाब्रवीत् ।
रथेन खरयुक्तेन तमागतमुदीक्ष्य सः ॥ ८ ॥

हनुमान्वेगसंपन्नो जहर्ष च ननाद च ।
तं तोरणविटङ्कस्थं हनुमन्तं महाकपिम् ॥ ९ ॥

जम्बुमाली महाबाहुर्बिभ्याध निशितैः शरैः ।
अर्धचन्द्रेण वदने शिरस्येकेन कर्णिना ॥१०॥

बाह्वोर्विव्याध नाराचैर्दशभिस्तु कपीश्वरम् ।
तस्य तच्छुशुभे ताम्रं शरेणाभिहतं मुखम् ॥

शरदीवाम्बुजं फुल्लं विद्धं भास्कररश्मिना ।
तत्तस्य रक्तं रक्तेन रञ्जितं शुशुभे मुखम् ॥

यथाकाशे महापद्मं सिक्तं काञ्चनबिन्दुभिः ।
चुकोप बाणाभिहतो राक्षसस्य महाकपिः ॥

ततः पार्श्वेऽतिविपुलां ददर्श महतीं शिलाम् ।
तरसा तां समुत्पाट्य चिक्षेप बलवद्बली ॥

तां शरैर्दशभिः क्रुद्धस्ताडयामास राक्षसः ।
विपन्नं कर्म तद्दृष्ट्वा हनुमांश्चण्डविक्रमः ॥ १५ ॥

सालं विपुलमुत्पाट्य भ्रामयामास वीर्यवान् ।
भ्रामयन्तं कपिं दृष्ट्वा सालवृक्षं महाबलम् ॥

चिक्षेप सुबहून्बाणाञ्जम्बुमाली महाबलः ।
सालं चतुर्भिश्चिच्छेद वानरं पञ्चभिर्भुजे ॥

शिरस्येकेन बाणेन द्वाभ्यां बाह्वोस्तथान्तरे ।
स शरैः पूरिततनुः कोपेन महता वृतः ॥

तमेव परिघं गृह्य भ्रामयामास मारुतिः ।
अतिवेगोऽतिवेगेन भ्रामयित्वा बलोत्कटः ॥

परिघं पातयामास जम्बुमालेर्महोरसि ।
तस्य चैव शिरो नास्ति न बाहू न च जानुनी ॥

न धनुर्न रथो नाश्वास्तत्रादृश्यन्त नेषवः ।
स हतस्तरसा तेन जम्बुमाली महाबलः ॥

पपात निहतो भूमौ चूर्णिताङ्गविभूषणः ।
जम्बुमालिं च निहतं किंकरांश्च महाबलान् ।
चुक्रोध रावणः श्रुत्वा कोपसंरक्तलोचनः ॥

स रोषसंवर्तितताम्रलोचनः
प्रहस्तपुत्रे निहते महाबले ।
अमात्यपुत्रानतिवीर्यविक्रमा-
न्समादिदेशाशु निशाचरेश्वरः ॥ ३३ ॥

इति चतुश्चत्वारिंशः सर्गः ॥

---

## पञ्चचत्वारिंशः सर्गः ॥

---

ततस्ते राक्षसेन्द्रेण चोदिता मन्त्रिणः सुताः ।
निर्ययुर्भवनात्तस्मात्सप्त सप्तार्चिवर्चसः ॥ १ ॥

महाबलपरीवारा धनुष्मन्तो महाबलाः ।
कृतास्त्रास्त्रविदां श्रेष्ठाः परस्परजयैषिणः ॥ २ ॥

हेमजालपरिक्षिप्तैर्ध्वजवद्भिः पताकिभिः ।
तोयदस्वननिर्घोषैर्वाजियुक्तैर्महारथैः ॥ ३ ॥

तप्तकाञ्चनचित्राणि चापान्यमितविक्रमाः ।
विस्फारयन्तः संहृष्टास्तडित्वन्त इवाम्बुदाः ॥

जनन्यस्तु ततस्तेषां विदित्वा किंकरान्हतान् ।
बभूवुः शोकसंभ्रान्ताः सबान्धवसुहृज्जनाः ॥

ते परस्परसंघर्षात्तप्तकाञ्चनभूषणाः ।
अभिपेतुर्हनूमन्तं तोरणस्थमवस्थितम् ॥ ६ ॥

सृजन्तो बाणवृष्टिं ते रथगर्जितनिःस्वनाः ।
वृष्टिमन्त इवाम्भोदा विचेरुर्नैर्ऋताम्बुदाः ॥ ७ ॥

अवकीर्णस्ततस्ताभिर्हनुमाञ्शरवृष्टिभिः ।
अभवत्संवृताकारः शैलराडिव वृष्टिभिः ॥ ८॥

स शरान्मोघयामास तेषामाशुचरः कपिः ।
रथवेगं च वीराणां विचरन्विमलेऽम्बरे ॥९॥

स तैः क्रीडन्धनुष्मद्भिर्व्योम्नि वीरः प्रकाशते ।
धनुष्मद्भिर्यथा मेघैर्मारुतिः प्रभुरम्बरे ॥ १० ॥

स कृत्वा निनदं घोरं त्रासयंस्तां महाचमूम् ।
चकार हनुमान्वेगं तेषु रक्षःसु वीर्यवान् ॥

तलेनाभ्यहनत्कांश्चित्पद्भ्यां कांश्चित्परंतपः ।
मुष्टिनाभ्यहनत्कांश्चिन्नखैः कांश्चिद्व्यदारयत् ॥

प्रममाथोरसा कांश्चिदूरुभ्यामपरान्कपिः ।
केचित्तस्य निनादेन तत्रैव पतिता भुवि ॥

ततस्तेष्ववसन्नेषु भूमौ निपतितेषु च ।
तत्सैन्यमगमत्सर्वं दिशो दश भयार्दितम् ॥

विनेदुर्विस्वरं नागा निपेतुर्भुवि वाजिनः ।
भग्ननीडध्वजच्छत्रैर्भूश्च कीर्णाभवद्रथैः ॥ १५ ॥

स्रवता रुधिरेणाथ स्रवन्त्यो दर्शिताः पथि ।
विविधैश्च स्वरैर्लङ्का ननाद विकृतं तदा ॥१६॥

स तान्प्रवृद्धान्विनिहत्य राक्षसा-
न्महाबलश्चण्डपराक्रमः कपिः ।
युयुत्सुरन्यैः पुनरेव राक्षसै-
स्तदेव वीरोऽभिजगाम तोरणम् ॥

इति पञ्चचत्वारिंशः सर्गः ॥



## षट्चत्वारिंशः सर्गः ॥



हतान्मन्त्रिसुतान्बुद्ध्वा वानरेण महात्मना ।
रावणः संवृताकारश्चकार मतिमुत्तमाम् ॥ १ ॥

स विरूपाक्षयूपाक्षौ दुर्धरं चैव राक्षसम् ।
प्रघसं भासकर्णं च पञ्च सेनाग्रनायकान् ॥

संदिदेश दशग्रीवो वीरान्नयविशारदान् ।
हनुमद्ग्रहणे व्यग्रान्वायुवेगसमान्युधि ॥ २ ॥

यान्तु सेनाग्रगाः सर्वे महाबलपरिग्रहाः ।
सवाजिरथमातङ्गाः स कपिः शास्यतामिति ॥

यत्नैश्च खलु भाव्यं स्यात्तमासाद्य वनालयम् ।
कर्म चापि समाधेयं देशकालाविरोधितम् ॥

न ह्यहं तं कपिं मन्ये कर्मणा प्रतितर्कयन् ।
सर्वथा तन्महद्भूतं महाबलपरिग्रहम् ॥ ६ ॥

भवेदिन्द्रेण वा सृष्टमस्मदर्थं तपोबलात् ।
सनागयक्षगन्धर्वा देवासुरमहर्षयः ॥ ७ ॥

युष्माभिः सहितैः सर्वैर्मया सह विनिर्जिताः ।
तैरवश्यं विधातव्यं व्यलीकं किंचिदेव नः ॥

तदेव नात्र संदेहः प्रसह्य परिगृह्यताम् ।
नावमान्यश्च युष्माभिर्हरिर्धीरपराक्रमः ॥ ९ ॥

दृष्टा हि हरयः पूर्वं मया विपुलविक्रमाः ।
वाली च सहसुग्रीवो जाम्बवांश्च महाबलः ॥

नीलः सेनापतिश्चैव ये चान्ये द्विविदादयः ।
नैवं तेषां गतिर्भीमा न तेजो न पराक्रमः ॥

न मतिर्न बलोत्साहौ न रूपपरिकल्पनम् ।
महत्सत्त्वमिदं ज्ञेयं कपिरूपं व्यवस्थितम् ॥

प्रयत्नं महदास्थाय क्रियतामस्य निग्रहः ।
कामं लोकास्त्रयः सेन्द्राः ससुरासुरमानवाः ॥

भवतामग्रतः स्थातुं न पर्याप्ता रणाजिरे ।
तथापि तु नयज्ञेन जयमाकाङ्क्षता रणे ॥१४॥

आत्मा रक्ष्यः प्रयत्नेन युद्धसिद्धिर्हि चञ्चला ।
ते स्वामिवचनं सर्वे प्रतिगृह्य महौजसः ॥१५॥

समुत्पेतुर्महावेगा हुताशसमतेजसः ।
रथैर्मत्तैश्च मातङ्गैर्वाजिभिश्च महाजवैः ॥ १६ ॥

शस्त्रैश्च विविधैस्तीक्ष्णैः सर्वैश्चोपचिता बलैः ।
ततस्तं ददृशुर्वीरा दीप्यमानं महाकपिम् ॥१७॥

रश्मिमन्तमिवोद्यन्तं स्वतेजोरश्मिमालिनम् ।
तोरणस्थं महोत्साहं महावेगं महाबलम् ॥१८॥

महामतिं महोत्साहं महाकायं महाबलम् ।
तं समीक्ष्यैव ते सर्वे दिक्षु सर्वास्ववस्थिताः ॥

तैस्तैः प्रहरणैर्भीमैरभिपेतुस्ततस्ततः ।
तस्य पञ्चायसास्तीक्ष्णाः शिताः पीतमुखाः शराः

शिरस्युत्पलपत्राभा दुर्धरेण निपातिताः ।
स तैः पञ्चभिराविद्धः शरैः शिरसि वानरः ॥

उत्पपात नदन्व्योम्नि दिशो दश विनादयन् ।
ततस्तु दुर्धरो वीरः सरथः सज्यकार्मुकः ॥

किरञ्शरशतैस्तीक्ष्णैरभिपेदे महाबलः ।
स कपिर्वारयामास तं व्योम्नि शरवर्षिणम् ॥

वृष्टिमन्तं पयोदान्ते पयोदमिव मारुतः ।
अर्द्यमानस्ततस्तेन दुर्धरेणानिलात्मजः ॥२४॥

चकार निनदं भूयो व्यवर्धत च वेगवान् ।
स दूरं सहसोत्पत्य दुर्धरस्य रथे हरिः ॥२५॥

निपपात महावेगो विद्युद्राशिर्गिराविव ।
ततः स मथिताष्टाश्वं रथं भग्नाक्षकूबरम् ॥२६॥

विहाय न्यपतद्भूमौ दुर्धरस्त्यक्तजीवितः ।
तं विरूपाक्षयूपाक्षौ दृष्ट्वा निपतितं भुवि ॥२७॥

संजातरोषौ दुर्धर्षावुत्पेततुररिंदमौ ।
स ताभ्यां सहसोत्पत्य विष्ठितो विमलेऽम्बरे ॥

मुद्गराभ्यां महाबाहुर्वक्षस्यभिहतः कपिः ।
तयोर्वेगवतोर्वेगं विनिहत्य महाबलः ॥ २९ ॥

निपपात पुनर्भूमौ सुपर्णसमविक्रमः ।
स सालवृक्षमासाद्य तमुत्पाट्य च वानरः ॥

तावुभौ राक्षसौ वीरौ जघान पवनात्मजः ।
ततस्तांस्त्रीन्हताञ्ज्ञात्वा वानरेण तरस्विना ॥

अभिपेदे महावेगः प्रसह्य प्रघसो हरिम् ।
भासकर्णश्च संक्रुद्धः शूलमादाय वीर्यवान् ।

एकतः कपिशार्दूलं यशस्विनमवस्थितम् ।
पट्टसेन शिताग्रेण प्रघसः प्रत्ययोधयत् ॥

भासकर्णश्च शूलेन राक्षसः कपिसत्तमम् ।
स ताभ्यां विक्षतैर्गात्रैरसृग्दिग्धतनूरुहः ॥३४।

अभवद्वानरः क्रुद्धो बालसूर्यसमप्रभः ।
समुत्पाट्य गिरेः शृङ्गं समृगव्यालपादपम् ॥

जघान हनुमान्वीरो राक्षसौ कपिकुञ्जरः ।
ततस्तेष्ववसन्नेषु सेनापतिषु पञ्चसु ॥ ३७ ॥

बलं तदवशेषं च नाशयामास वानरः ।
अश्वैरश्वान्गजैर्नागान्योधैर्योधान्रथै रथान् ॥

स कपिर्नाशयामास सहस्राक्ष इवासुरान् ।
हतैर्नागैस्तुरंगैश्च भग्नाक्षैश्च महारथैः ।
हतैश्च राक्षसैर्भूमी रुद्धमार्गा समन्ततः । ३८॥

ततः कपिस्तान्ध्वजिनीपतीन्रणे
निहत्य वीरान्सबलान्सवाहनान् ।
तदेव वीरः परिगृह्य तोरणं
कृतक्षणः काल इव प्रजाक्षये । ३९ ॥

इति षट्चत्वारिंशः सर्गः ॥

## सप्तचत्वारिंशः सर्गः ॥

सेनापतीन्पञ्च स तु प्रमापिता-
न्हनूमता सानुचरान्सवाहनान् ।

समीक्ष्य राजा समरोद्यतोन्मुखं
　कृपारसं सत्यवेक्षणाग्रतः ॥ १ ॥

स तस्य दृष्ट्यर्पणसंप्रचोदितः
　प्रतापवान्काञ्चनचित्रकार्मुकः ।
समुत्पपाताथ सदस्युदीरितो
　द्विजातिमुख्यैर्हविषेव पावकः ॥ २ ॥

ततो महद्बालदिवाकरप्रभं
　प्रतप्तजाम्बूनदजालसंततम् ।
रथं समास्थाय ययौ स वीर्यवा-
　न्महाहरिं तं प्रति नैर्ऋतर्षभः ॥ ३ ॥

ततस्तपःसंग्रहसंचयार्जितं
　प्रतप्तजाम्बूनदजालशोभितम् ।
पताकिनं रत्नविभूषितध्वजं
　मनोजवाष्टाश्ववरैः सुयोजितम् ॥ ४ ॥

सुरासुराधृष्यमसङ्गचारिणं
　रविप्रभं व्योमचरं समाहितम् ।

सतूणमष्टासिनिबद्धबन्धुरं
यथाक्रमावेशितशक्तितोमरम् ॥ ५ ॥

विराजमानं प्रतिपूर्णवस्तुना
सहेमदाम्ना शशिसूर्यवर्चसा ।
दिवाकराभं रथमास्थितस्ततः
स निर्जगामामरतुल्यविक्रमः ॥ ६ ॥

स पूरयन्खं च महीं च साचलां
तुरंगमातङ्गमहारथस्वनैः ।
बलैः समेतैः स हि तोरणस्थितं
समर्थमासीनमुपागमत्कपिम् ॥ ७ ॥

स तं समासाद्य हरिं हरीक्षणो
युगान्तकालाग्निमिव प्रजाक्षये ।
अवस्थितं विस्मितजातसंभ्रमः
समैक्षताक्षो बहुमानचक्षुषा ॥ ८ ॥

स तस्य वेगं च कपेर्महात्मनः
पराक्रमं चारिषु पार्थिवात्मजः ।

विचारयन्स्वं च बलं महाबलो
हिमक्षये सूर्य इवाभिवर्धते ॥ ९ ॥

स जातमन्युः प्रसमीक्ष्य विक्रमं
स्थिरं स्थितः संयति दुर्निवारणम् ।
समाहितात्मा हनुमन्तमाहवे
प्रचोदयामास शरैस्त्रिभिः शितैः ॥

ततः कपिं तं प्रसमीक्ष्य गर्वितं
जितश्रमं शत्रुपराजयोर्जितम् ।
अवैक्षताक्षः समुदीर्णमानसः
स बाणपाणिः प्रगृहीतकार्मुकः ॥

स हेमनिष्काङ्गदचारुकुण्डलः
समाससादाशुपराक्रमः कपिम् ।
तयोर्बभूवाप्रतिमः समागमः
सुरासुराणामपि संभ्रमप्रदः ॥ १२ ॥

ररास भूमिर्न तताप भानुमा-
न्ववौ न वायुः प्रचचाल चाचलः ।

कपेः कुमारस्य च वीक्ष्य संयुगं
ननाद च द्यौश्चलितेव चुक्षुभे ॥ १३ ॥

ततः स वीरः सुमुखान्पतत्रिणः
सुवर्णपुङ्खान्सविषानिवोरगान् ।
समाधिसंयोगविमोक्षतत्त्ववि-
च्छरानथ त्रीन्कपिमूर्ध्न्यपातयत् ॥१४॥

स तैः शरैर्मूर्ध्नि समं निपातितैः
क्षरन्नसृग्दिग्धविवृत्तलोचनः ।
नवोदितादित्यनिभः शरांशुमा-
न्व्यरोचतादित्य इवांशुमालिकः ॥१५॥

ततः स पिङ्गाधिपमन्त्रिसत्तमः
समीक्ष्य तं राजवरात्मजं रणे ।
उदग्रचित्रायुधचित्रकार्मुकं
जहर्ष चापूर्यत चाहवोन्मुखः ॥ १६ ॥

स मन्दराग्रस्थ इवांशुमालिको
विवृद्धकोपो बलवीर्यसंयुतः ।

कुमारयक्षं सधनुं सवाहनं
दंदाह नेत्राग्निमरीचिभिस्तदा ॥ १७ ॥

ततः स बाणासनचित्रकार्मुकः
शरप्रवर्षो युधि राक्षसाम्बुदः ।
शरान्मुमोचाशु हरीश्वराचले
बलाहको वृष्टिमिवाचलोत्तमे ॥ १८ ॥

ततः कपिस्तं रणचण्डविक्रमं
विवृद्धतेजोबलवीर्यसंयुतम् ।
कुमारमक्षं प्रसमीक्ष्य संयुगे
ननाद हर्षाद्घनतुल्यनिःस्वनः ॥ १९ ॥

स बालभावाद्युधि वीर्यदर्पितः
प्रवृद्धमन्युः क्षतजोपमेक्षणः ।
समाससादाप्रतिमं कपिं रणे
गजो महाकूपमिवावृतं तृणैः ॥ २० ॥

स तेन बाणैः प्रसभं निपातितै-
श्चकार नादं घननादनिःस्वनः ।

समुत्पपाताशु नभः स मारुति-
र्भुजोरुविक्षेपणघोरदर्शनः ॥ २१ ॥

समुत्पतन्तं समभिद्रवद्बली
स राक्षसानां प्रवरः प्रतापवान् ।
रथी रथिश्रेष्ठतमः किरञ्शरैः
पयोधरः शैलमिवाश्मवृष्टिभिः ॥ २२ ॥

स तांश्शरांस्तस्य विमोक्षयन्कपि-
श्चचार वीरः पथि वायुसेविते ।
शरान्तरे मारुतवद्विनिष्पत-
न्मनोजवः संयति चण्डविक्रमः ॥२३॥

तमात्तबाणासनमाहवोन्मुखं
खमास्तृणन्तं विशिखैः शरोत्तमैः ।
अवैक्षताक्षं बहुमानचक्षुषा
जगाम चिन्तां च स मारुतात्मजः ॥

ततः शरैर्भिन्नभुजान्तरः कपिः
कुमारवीर्येण महात्मना नदन् ।

महाभुजः कर्मविशेषतस्त्वयि-
   द्विचिन्तयामास रणे पराक्रमम् ॥२५॥

अथार्कवद्बालदिवाकरप्रभः
   करोत्ययं कर्म महन्महाबलः ।
न चास्य सर्वाहवकर्मशोभिनः
   प्रमापणे मे मतिरत्र जायते ॥ २६ ॥

अयं महात्मा च महांश्च वीर्यतः
   समाहितश्चातिसहश्च संयुगे ।
असंशयं कर्मगुणोदयादयं
   सनागयक्षैर्मुनिभिश्च पूजितः ॥ २७ ॥

पराक्रमोत्साहविवृद्धमानसः
   समीक्षते मां प्रमुखागतः स्थितः ।
पराक्रमो ह्यस्य मनांसि कम्पये-
   त्सुरासुराणामपि शीघ्रगामिनः ॥२८॥

न खल्वयं नाभिभवेदुपेक्षितः
   पराक्रमो ह्यस्य रणे विवर्धते ।

प्रमापणं त्वेव ममास्य रोचते
न वर्धमानोऽग्निरुपेक्षितुं क्षमः ॥ २९ ॥

इति प्रवेगं तु परस्य तर्कय-
न्स्वकर्मयोगं च विधाय वीर्यवान् ।
चकार वेगं तु महाबलस्तदा
मतिं च चक्रेऽस्य वधे महाकपिः ॥

स तस्य तानष्ट हयान्महाजवा-
न्समाहितान्भारसहान्विवर्तने ।
जघान वीरः पथि वायुसेविते
तलप्रहारैः पवनात्मजः कपिः ॥ ३१ ॥

ततस्तलेनाभिहतो महारथः
स तस्य पिङ्गाधिपमन्त्रिनिर्जितः ।
प्रभग्ननीडः परिमुक्तकूबरः
पपात भूमौ हतवाजिरम्बरात् ॥ ३२ ॥

स तं परित्यज्य महारथो रथं
सकार्मुकः खड्गधरः खमुत्पतन् ।

तपोभियोगादृषिवत्प्रवीर्यवा
न्विहाय देहं मरुतामिवालयम् ॥ ३३ ॥

ततः कपिस्तं विचरन्तमम्बरे
पतत्रिराजानिलसिद्धसेविते ।
समेत्य तं मारुततुल्यविक्रमः
क्रमेण जग्राह स पादयोर्दृढम् ॥ ३४ ॥

स तं समाविध्य सहस्रशः कपि-
र्महोरगं गृह्य इवाण्डजेश्वरः ।
मुमोच वेगात्पितृतुल्यविक्रमो
महीतले संयति वानरोत्तमः ॥ ३५ ॥

स भग्नबाहूरुकटीशिरोधरः
क्षरन्नसृङ्निर्मथितास्थिलोचनः ।
प्रभिन्नसंधिः प्रविकीर्णबन्धनो
हतः क्षितौ वायुसुतेन राक्षसः ॥ ३६ ॥

महाकपिर्भूमितले निपीड्य तं
चकार रक्षोधिपतेर्महद्भयम् ।

महर्षिभिश्चक्रचरैर्महाव्रतैः
समेत्य भूतैश्च सयक्षपन्नगैः ॥ ३७ ॥

सुरैश्च सेन्द्रैर्भृशजातविस्मयै-
र्हते कुमारे स कपिर्निरीक्षितः ।
निहत्य तं वज्रिसुतोपमं रणे
कुमारमक्षं क्षतजोपमेक्षणम् ।
तदेव वीरोऽभिजगाम तोरणं
कृतक्षणः काल इव प्रजाक्षये ॥ ३८ ॥

इति सप्तचत्वारिंशः सर्गः ॥



अष्टचत्वारिंशः सर्गः ॥



ततस्तु रक्षोधिपतिर्महात्मा
हनूमताक्षे निहते कुमारे ।
मनः समाधाय तदेन्द्रकल्पं
समादिदेशेन्द्रजितं स रोषात् ॥ १ ॥

त्वमस्त्रविच्छस्त्रविदां वरिष्ठः
सुरासुराणामपि शोकदाता।
सुरेषु सेन्द्रेषु च दृष्टकर्मा
पितामहाराधनसंचितास्त्रः ॥ २ ॥

।वास्त्रबलमासाद्य नासुरा न मरुद्गणाः।
। शेकुः समरे स्थातु सुरेश्वरसमाश्रिताः ॥३॥

। कश्चित्त्रिषु लोकेषु संयुगे न गतश्रमः।
[ुजवीर्याभिगुप्तश्च तपसा चाभिरक्षितः।
[ेशकालविभागज्ञस्त्वमेव मतिसत्तमः ॥ ४ ॥

न तेऽस्त्यशक्यं समरेषु कर्मणा
न तेऽस्त्यकार्यं मतिपूर्वमन्त्रणे।
न सोऽस्ति कश्चित्त्रिषु संग्रहेषु वै
न वेद यस्तेऽस्त्रबलं बलं च ते ॥ ५ ॥

ममानुरूपं तपसो बलं च ते
पराक्रमश्चास्त्रबलं च संयुगे।
न त्वां समासाद्य रणावमर्दे
मनः श्रमं गच्छति निश्चितार्थम् ॥ ६ ॥

निहताः किंकराः सर्वे जम्बुमाली च राक्षसः ।
अमात्यपुत्रा वीराश्च पञ्च सेनाग्रयायिनः ॥७॥

बलानि सुसमृद्धानि साश्वनागरथानि च ।
सहोदरस्ते दयितः कुमारोऽक्षश्च सूदितः ।
न हि तेष्वेव मे सारो यस्त्वय्यरिनिषूदन ॥

इदं हि दृष्ट्वा मतिमन्महद्बलं
कपेः प्रभावं च पराक्रमं च ।
त्वमात्मनश्चापि समीक्ष्य सारं
कुरुष्व वेगं स्वबलानुरूपम् । ९ ॥

बलावमर्दस्त्वयि संनिकृष्टे
यथागते शाम्यति शान्तशत्रौ ।
तथा समीक्ष्यात्मबलं परं च
समारभस्वास्त्रविदां वरिष्ठ ॥ १० ॥

न वीर सेना गणशोच्यवन्ति
न वज्रमादाय विशालसारम् ।
न मारुतस्यास्य गतिप्रमाणं
न चाग्निकल्पः करणेन हन्तुम् ॥११॥

तमेवमर्थं प्रसमीक्ष्य सम्य-
क्स्वकर्मसाम्याद्धि समाहितात्मा ।
स्मरन्स दिव्यं धनुषोऽस्त्रवीर्यं
प्रजाक्षत कर्म समारभस्व ॥ १२ ॥

न खल्वियं मतिः श्रेष्ठा यत्त्वां संप्रेषयाम्यहम् ।
इयं च राजधर्माणां क्षत्रस्य च मतिर्मता ॥

नानाशस्त्रैश्च संग्रामे वैशारद्यमरिंदम ।
अवश्यमेव बोद्धव्यं काम्यश्च विजयो रणे ॥

ततः पितुस्तद्वचनं निशम्य
प्रदक्षिणं दक्षसुतप्रभावः ।
चकार भर्तारमदीनसत्त्वो
रणाय वीरः प्रतिपन्नबुद्धिः ॥ १५ ॥

ततस्तैः स्वगणैरिष्टैरिन्द्रजित्प्रतिपूजितः ।
युद्धोद्धतः कृतोत्साहः संग्रामं प्रत्यपद्यत ॥

श्रीमान्पद्मपलाशाक्षो राक्षसाधिपतेः सुतः ।
निर्जगाम महातेजाः समुद्र इव पर्वसु ॥ १७ ॥

स पक्षिराजानिलतुल्यवेगै-
र्व्यालैश्चतुर्भिः सिततीक्ष्णदंष्ट्रैः।
रथं समायुक्तमसह्यवेगं
समारुरोहेन्द्रजिदिन्द्रकल्पः ॥ १८ ॥

स रथी धन्विनां श्रेष्ठः शस्त्रज्ञोऽस्त्रविदां वरः।
रथेनाभिययौ क्षिप्रं हनूमान्यत्र सोऽभवत् ॥

स तस्य रथनिर्घोषं ज्यास्वनं कार्मुकस्य च।
निशम्य हरिवीरोऽसौ सम्प्रहृष्टतरोऽभवत् ॥

स महच्चापमादाय शितशल्यांश्च सायकान्।
हनुमन्तमभिप्रेत्य जगाम रणपण्डितः ॥ २१ ॥

तस्मिंस्ततः संयति जातहर्षे
रणाय निर्गच्छति बाणपाणौ।
दिशश्च सर्वाः कलुषा बभूवु-
र्मृगाश्च रौद्रा बहुधा विनेदुः ॥ २२ ॥

समागतास्तत्र तु नागयक्षा
महर्षयश्चक्रचराश्च सिद्धाः।

नभः समावृत्य च पक्षिसङ्घा
विनेदुरुच्चैः परमप्रहृष्टाः ॥ २३ ॥

आयान्तं सरथं दृष्ट्वा तूर्णमिन्द्रजितं कपिः ।
विननाद महानादं व्यवर्धत च वेगवान् ॥

इन्द्रजित्तु रथं दिव्यमास्थितश्चित्रकार्मुकः ।
धनुर्विस्फारयामास तडिदूर्जितनिःस्वनम् ॥

ततः समेतावतितीक्ष्णवेगौ
महाबलौ तौ रणनिर्विशङ्कौ ।
कपिश्च रक्षोधिपतेश्च पुत्रः
सुरासुरेन्द्राविव बद्धवैरौ ॥ २६ ॥

स तस्य वीरस्य महारथस्य
धनुष्मतः संयति संमतस्य ।
शरप्रवेगं व्यहनत्प्रवृद्ध-
श्चचार मार्गे पितुरप्रमेयः ॥ २७ ॥

ततः शरानायततीक्ष्णशल्या-
न्सुपत्रिणः काञ्चनचित्रपुङ्खान् ।

मुमोच वीरः परवीरहन्ता
सुसंनतान्वज्रनिपातवेगान् ॥ २८ ॥

स तस्य तत्स्यन्दननिःस्वनं च
मृदङ्गभेरीपटहस्वनं च ।
विकृष्यमाणस्य च कार्मुकस्य
निशम्य घोषं पुनरुत्पपात ॥ २९ ॥

शराणामन्तरेष्वाशु व्यवर्तत महाकपिः ।
हरिस्तस्याभिलक्ष्यस्य मोघयँल्लक्ष्यसंग्रहम् ॥

शराणामग्रतस्तस्य पुनः समभिवर्तत ।
प्रसार्य हस्तौ हनुमानुत्पपातानिलात्मजः ।

तावुभौ वेगसम्पन्नौ रणकर्मविशारदौ ।
सर्वभूतमनोग्राहि चक्रतुर्युद्धमुत्तमम् ॥ ३२ ॥

हनूमतो वेद न राक्षसोऽन्तरं
न मारुतिस्तस्य महात्मनोऽन्तरम् ।
परस्परं निर्विषहौ बभूवतुः
समेत्य तौ देवसमानविक्रमौ ॥ ३३ ॥

ततस्तु लक्ष्ये स विहन्यमाने
शरेष्वमोघेषु च संपतत्सु ।
जगाम चिन्तां महतीं महात्मा
समाधिसंयोगसमाहितात्मा ॥ ३४ ॥

ततो मतिं राक्षसराजसूनु-
श्चकार तस्मिन्हरिवीरमुख्ये ।
अवध्यतां तस्य कपेः समीक्ष्य
कथं निगच्छेदिति निग्रहार्थम् ॥ ३५ ॥

ततः पैतामहं वीरः सोऽस्त्रमस्त्रविदां वरः ।
संदधे सुमहातेजास्तं हरिप्रवरं प्रति ॥ ३६ ॥

अवध्योऽयमिति ज्ञात्वा तमस्त्रेणास्त्रतत्त्ववित् ।
निजग्राह महाबाहुर्मारुतात्मजमिन्द्रजित् ॥३७॥

तेन बद्धस्ततोऽस्त्रेण राक्षसेन स वानरः ।
अभवन्निर्विचेष्टश्च पपात च महीतले ॥ ३८ ॥

ततोऽथ बुद्ध्वा स तदस्त्रबन्धं
प्रभोः प्रभावाद्विगतात्मवेगः ।

पितामहानुग्रहमात्मनश्च
विचिन्तयामास हरिप्रवीरः ॥ ३९ ॥

ततः स्वायंभुवैर्मन्त्रैर्ब्रह्मास्त्रमभिमन्त्रितम् ।
हनूमांश्चिन्तयामास वरदानं पितामहात् ॥

न मेऽस्य बन्धस्य च शक्तिरस्ति
विमोक्षणे लोकगुरोः प्रभावात् ।
इत्येव मत्वा विहितोऽस्त्रबन्धो
मयात्मयोनेरनुवर्तितव्यः ॥ ४१ ॥

स वीर्यमस्त्रस्य कपिर्विचार्य
पितामहानुग्रहमात्मनश्च ।
विमोक्षशक्तिं परिचिन्तयित्वा
पितामहाज्ञामनुवर्तते स्म ॥ ४२ ॥

अस्त्रेणापि हि बद्धस्य भयं मम न जायते ।
पितामहमहेन्द्राभ्यां रक्षितस्यानिलेन च ॥

ग्रहणे चापि रक्षोभिर्महान्मे गुणदर्शनः ।
राक्षसेन्द्रेण संवादस्तस्माद्गृह्णन्तु मां परे ॥४४॥

स निश्चितार्थः परवीरहन्ता
समीक्ष्यकारी विनिवृत्तचेष्टः।
परैः प्रसह्याभिगतैर्निगृह्य
ननाद तैस्तैः परिभर्त्स्यमानः॥ ४५॥

ततस्तं राक्षसा दृष्ट्वा निर्विचेष्टमरिंदमम्।
बबन्धुः शणवल्कैश्च द्रुमचीरैश्च संहतैः॥

स रोचयामास परैश्च बन्धं
प्रसह्य वीरैरभिनिग्रहं च।
कौतूहलान्मां यदि राक्षसेन्द्रो
द्रष्टुं व्यवस्येदिति निश्चितार्थः॥४७॥

स बद्धस्तेन वल्केन विमुक्तोऽस्त्रेण वीर्यवान्।
अस्त्रबन्धः स चान्यं हि न बन्धमनुवर्तते॥

अथेन्द्रजित्तु द्रुमचीरबद्धं
विचार्य वीरः कपिसत्तमं तम्।
विमुक्तमस्त्रेण जगाम चिन्तां
नान्येन बद्धो ह्यनुवर्ततेऽस्त्रम्॥ ४९॥

अहो महत्कर्म कृतं निरर्थकं
न राक्षसैर्मन्त्रगतिर्विमृष्टा ।
पुनश्च नास्त्रे विहतेऽस्त्रमन्य-
त्प्रवर्तते संशयिताः स्म सर्वे ॥ ५० ॥

अस्त्रेण हनुमान्मुक्तो नात्मानमवबुध्यत ।
कृष्यमाणस्तु रक्षोभिस्तैश्च बन्धैर्निपीडितः ॥

हन्यमानस्ततः क्रूरै राक्षसैः काष्ठमुष्टिभिः ।
समीपं राक्षसेन्द्रस्य प्राकृष्यत स वानरः ॥

अथेन्द्रजित्तं प्रसमीक्ष्य मुक्त-
मस्त्रेण बद्धं द्रुमचीरसूत्रैः ।
व्यदर्शयत्तत्र महाबलं तं
हरिप्रवीरं सगणाय राज्ञे ॥ ५३ ॥

तं मत्तमिव मातङ्गं बद्धं कपिवरोत्तमम् ।
राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ॥

कोऽयं कस्य कुतो वात्र किं कार्यं को व्यपाश्रयः ।
इति राक्षसवीराणां तत्र संजज्ञिरे कथाः ॥

हन्यतां दह्यतां वापि भक्ष्यतामिति चापरे ।
राक्षसास्तत्र संक्रुद्धाः परस्परमथाब्रुवन् ॥५६॥

अतीत्य मार्गं सहसा महात्मा
स तत्र रक्षोऽधिपपादमूले ।
ददर्श राज्ञः परिचारवृद्धा
न्गृहं महारत्नविभूषितं च ॥ ५७ ॥

स ददर्श महातेजा रावणः कपिसत्तमम् ।
रक्षोभिर्विकृताकारैः कृष्यमाणमितस्ततः ॥

राक्षसाधिपतिं चापि ददर्श कपिसत्तमः ।
तेजोबलसमायुक्तं तपन्तमिव भास्करम् ॥

स रोषसंवर्तिततामदृष्टि
र्दशाननस्तं कपिमन्ववेक्ष्य
अथोपविष्टान्कुलशीलवृद्धा
न्समादिशत्तं प्रति मन्त्रिमुख्यान् ॥

यथाक्रमं तैः स कपिर्विपृष्टः
कार्यार्थमर्थस्य च मूलमादौ ।

निवेदयामास हरीश्वरस्य
दूतः सकाशादहमागतोऽस्मि ॥ ६१ ॥

इति अष्टचत्वारिंशः सर्गः ॥

—⁎—

## एकोनपञ्चाशः सर्गः ॥

---

ततः स कर्मणा तस्य विस्मितो भीमविक्रमः ।
हनुमान्रोषताम्राक्षो रक्षोधिपमवैक्षत ॥ १ ॥

भ्राजमानं महार्हेण काञ्चनेन विराजता ।
मुक्ताजालावृतेनाथ मकुटेन महाद्युतिम् ॥ २ ॥

वज्रसंयोगसंयुक्तैर्महार्हमणिविग्रहैः ।
हैमैराभरणैश्चित्रैर्मनसेव प्रकल्पितैः ॥ ३ ॥

महार्हक्षौमसंवीतं रक्तचन्दनरूषितम् ।
स्वनुलिप्तं विचित्राभिर्विविधाभिश्च भक्तिभिः ॥

विवृतैर्दर्शनीयैश्च रक्ताक्षैर्भीमदर्शनैः ।
दीप्ततीक्ष्णमहादंष्ट्रैः प्रलम्बदशनच्छदैः ॥ ५ ॥

शिरोभिर्दशभिर्वीरं भ्राजमानं महौजसम् ।
नानाव्यालसमाकीर्णैः शिखरैरिव मन्दरम् ॥

नीलाञ्जनचयप्रख्यं हारेणोरसि राजता ।
पूर्णचन्द्राभवक्त्रेण सबलाकमिवाम्बुदम् ॥ ७ ॥

बाहुभिर्बद्धकेयूरैश्चन्दनोत्तमरूषितैः ।
भ्राजमानाङ्गदैः पीनैः पञ्चशीर्षैरिवोरगैः ॥८॥

महति स्फाटिके चित्रे रत्नसंयोगसंस्कृते ।
उत्तमास्तरणास्तीर्णे सूपविष्टं वरासने । ९ ॥

अलङ्कृताभिरत्यर्थं प्रमदाभिः समन्ततः ।
वालव्यजनहस्ताभिरारात्समुपसेवितम् ॥१०॥

दुर्धरेण प्रहस्तेन महापार्श्वेन रक्षसा ।
मन्त्रिभिर्मन्त्रतत्त्वज्ञैर्निकुम्भेन च मन्त्रिणा ॥

उपोपविष्टं रक्षोभिश्चतुर्भिर्बलदर्पितैः ।
कृत्स्नः परिवृतो लोकश्चतुर्भिरिव सागरैः ॥

मन्त्रिभिर्मन्त्रतत्त्वज्ञैरन्यैश्च शुभबुद्धिभिः ।
अन्वास्यमानं सचिवैः सुरैरिव सुरेश्वरम् ॥

अपश्यद्राक्षसपतिं हनुमानतितेजसम् ।
विष्ठितं मेरुशिखरे सतोयमिव तोयदम् ॥१४॥

स तैः संपीड्यमानोऽपि रक्षोभिर्भीमविक्रमैः ।
विस्मयं परमं गत्वा रक्षोधिपमवैक्षत ॥ १५ ॥

भ्राजमानं ततो दृष्ट्वा हनुमान्राक्षसेश्वरम् ।
मनसा चिन्तयामास तेजसा तस्य मोहितः ॥

अहो रूपमहो धैर्यमहो सत्त्वमहो द्युतिः ।
अहो राक्षसराजस्य सर्वलक्षणयुक्तता ॥ १७ ॥

यद्यधर्मो न बलवान्स्यादयं राक्षसेश्वरः ।
स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता ॥

अस्य क्रूरैर्नृशंसैश्च कर्मभिर्लोककुत्सितैः ।
तेन बिभ्यति खल्वस्माल्लोकाः सामरदानवाः ॥

अयं ह्युत्सहते क्रुद्धः कर्तुमेकार्णवं जगत् ।
इति चिन्तां बहुविधामकरोन्मतिमान्कपिः ।
दृष्ट्वा राक्षसराजस्य प्रभावममितौजसः ॥२०॥

इति एकोनपञ्चाशः सर्गः ॥

## पञ्चाशः सर्गः ॥

---

तमुद्वीक्ष्य महाबाहुः पिङ्गाक्षं पुरतः स्थितम् ।
रोषेण महताविष्टो रावणो लोकरावणः ॥१॥

शङ्काहृतात्मा दध्यौ स कपीन्द्रं तेजसावृतम् ।
किमेष भगवान्नन्दी भवेत्साक्षादिहागतः ॥ २ ॥

येन शप्तोऽस्मि कैलासे मया सञ्चालिते पुरा ।
सोऽयं वानरमूर्तिः स्यात्किंस्विद्बाणोऽपि वासुरः

स राजा रोषताम्राक्षः प्रहस्तं मन्त्रिसत्तमम् ।
कालयुक्तमुवाचेदं वचो विपुलमर्थवत् ॥ ४ ॥

दुरात्मा पृच्छ्यतामेष कुतः किं वास्य कारणम् ।
वनभङ्गे च कोऽस्यार्थो राक्षसीनां च तर्जने ॥

मत्पुरीमप्रधृष्यां वागमने किं प्रयोजनम् ।
आयोधने वा किं कार्यं पृच्छ्यतामेष दुर्मतिः ॥

रावणस्य वचः श्रुत्वा प्रहस्तो वाक्यमब्रवीत् ।
समाश्वसिहि भद्रं ते न भीः कार्या त्वया कपे ॥

यदि तावत्त्वमिन्द्रेण प्रेषितो रावणालयम् ।
तत्त्वमाख्याहि मा भूत्ते भयं वानर मोक्ष्यसे ॥

यदि वैश्रवणस्य त्वं यमस्य वरुणस्य वा ।
चारुरूपमिदं कृत्वा प्रविष्टो नः पुरीमिमाम् ॥

विष्णुना प्रेषितो वापि दूतो विजयकाङ्क्षिणा ।
न हि ते वानर तेजो रूपमात्रं तु वानरम् ॥

तत्त्वतः कथयस्वाद्य ततो वानर मोक्ष्यसे ।
अनृतं वदतश्चापि दुर्लभं तव जीवितम् ॥११॥

अथ वा यन्निमित्तस्ते प्रवेशो रावणालये ।
एवमुक्तो हरिवरस्तदा रक्षोगणेश्वरम् ॥ १२ ॥

अब्रवीन्नास्मि शक्रस्य यमस्य वरुणस्य वा ।
धनदेन न मे सख्यं विष्णुना नास्मि चोदितः ।

जातिरेव मम त्वेषा वानरोऽहमिहागतः ।
दर्शने राक्षसेन्द्रस्य दुर्लभे तदिदं मया ॥१४॥

वनं राक्षसराजस्य दर्शनार्थे विनाशितम् ।
ततस्ते राक्षसाः प्राप्ता बलिनो युद्धकाङ्क्षिणः ॥

रक्षणार्थं तु देहस्य प्रतियुद्धा मया रणे ।
अस्त्रपाशैर्न शक्योऽहं बद्धुं देवासुरैरपि ॥२६॥

पितामहादेव वरो ममाप्येषोऽभ्युपागतः ।
राजानं द्रष्टुकामेन मयास्त्रमनुवर्तितम् ॥१७॥

विमुक्तो ह्यहमस्त्रेण राक्षसैस्त्वभिपीडितः ।
केनचिद्राजकार्येण संप्राप्तोऽस्मि तवान्तिकम् ॥

दूतोऽहमिति विज्ञेयो राघवस्यामितौजसः ।
श्रूयतां चापि वचनं मम पथ्यमिदं प्रभो ॥

इति पञ्चाशः सर्गः ॥



एकपञ्चाशः सर्गः ॥



तं समीक्ष्य महासत्त्वं सत्त्ववान्हरिसत्तमः ।
वाक्यमर्थवदव्यग्रस्तमुवाच दशाननम् ॥ १ ॥

अहं सुग्रीवसंदेशादिह प्राप्तस्तवालयम् ।
राक्षसेन्द्र हरीशस्त्वां भ्राता कुशलमब्रवीत् ॥

भ्रातुः शृणु समादेशं सुग्रीवस्य महात्मनः ।
धर्मार्थोपहितं वाक्यमिह चामुत्र च क्षमम् ॥

राजा दशरथो नाम रथकुञ्जरवाजिमान् ।
पितेव बन्धुर्लोकस्य सुरेश्वरसमद्युतिः ॥ ४ ॥

ज्येष्ठस्तस्य महाबाहुः पुत्रः प्रियकरः प्रभुः ।
पितुर्निदेशान्निष्क्रान्तः प्रविष्टो दण्डकावनम् ।

लक्ष्मणेन सह भ्रात्रा सीतया चापि भार्यया ।
रामो नाम महातेजा धर्म्यं पन्थानमाश्रितः ॥

तस्य भार्या वने नष्टा सीता पतिमनुव्रता ।
वैदेहस्य सुता राज्ञो जनकस्य महात्मनः ॥ ७॥

स मार्गमाणस्तां देवीं राजपुत्रः सहानुजः ।
ऋश्यमूकमनुप्राप्तः सुग्रीवेण च संगतः ॥ ८ ॥

तस्य तेन प्रतिज्ञातं सीतायाः परिमार्गणम् ।
सुग्रीवस्यापि रामेण हरिराज्यं निवेदितम् ॥

ततस्तेन मृधे हत्वा राजपुत्रेण वालिनम् ।
सुग्रीवः स्थापितो राज्ये हर्यृक्षाणां गणेश्वरः ॥

त्वया विज्ञातपूर्वश्च वाली वानरपुंगवः ।
रामेण निहतः सख्ये शरेणैकेन वानरः ॥ ११ ॥

स सीतामार्गणे व्यग्रः सुग्रीवः सत्यसंगरः ।
हरीन्संप्रेषयामास दिशः सर्वा हरीश्वरः ॥

तां हरीणां सहस्राणि शतानि नियुतानि च ।
दिक्षु सर्वासु मार्गन्ते ह्यधश्चोपरि चाम्बरे ॥

वैनतेयसमाः केचित्केचित्तत्रानिलोपमाः ।
असङ्गगतयः शीघ्रा हरिवीरा महाबलाः ॥

अहं तु हनुमान्नाम मारुतस्यौरसः सुतः ।
सीतायास्तु कृते तूर्णं शतयोजनमायतम् ॥

समुद्रं लङ्घयित्वैव तां दिदृक्षुरिहागतः ।
भ्रमता च मया दृष्टा गृहे ते जनकात्मजा ॥

तद्भवान्दृष्टधर्मार्थस्तपःकृतपरिग्रहः ।
परदारान्महाप्राज्ञ नोपरोद्धुं त्वमर्हसि ॥ १७ ॥

न हि धर्मविरुद्धेषु बह्वपायेषु कर्मसु ।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥

कथं लक्ष्मणमुक्तानां रामकोपानुवर्तिनाम् ।
शराणामग्रतः स्थातुं शक्तो देवासुरेष्वपि ॥

न चापि त्रिषु लोकेषु राजन्विद्येत कश्चन ।
राघवस्य व्यलीकं यः कृत्वा सुखमवाप्नुयात् ॥

तत्त्रिकालहितं वाक्यं धर्म्यमर्थानुबन्धि च ।
मन्यस्व नरदेवाय जानकी प्रतिदीयताम् ॥

दृष्टा हीयं मया देवी लब्धं यदिह दुर्लभम् ।
उत्तरं कर्म यच्छेषं निमित्तं तत्र राघवः ।

लक्षितेयं मया सीता तथा शोकपरायणा ।
गृह्य यां नाभिजानासि पञ्चास्यामिव पन्नगीम् ॥

नेयं जरयितुं शक्या सासुरैरमरैरपि ।
विषसंसृष्टमत्यर्थं भुक्तमन्नमिवौजसा ॥ २४ ॥

तपःसंतापलब्धस्ते योऽयं धर्मपरिग्रहः ।
न स नाशयितुं न्याय्य आत्मप्राणपरिग्रहः ॥

अवध्यतां तपोभिर्यां भवान्समनुपश्यति ।
आत्मनः सासुरैर्देवैर्हेतुस्तत्राप्ययं महान् ॥

सुग्रीवो न हि देवोऽयं नासुरो न च राक्षसः।
न दानवो न गन्धर्वो न यक्षो न च पन्नगः॥

तस्मात्प्राणपरित्राणं कथं राजन्करिष्यसि।
न तु धर्मोपसंहारमधर्मफलसंहितम्॥ २८॥

तदेव फलमन्वेति धर्मश्चाधर्मनाशनः।
प्राप्तं धर्मफलं तावद्भवता नात्र संशयः॥२९॥

फलमस्याप्यधर्मस्य क्षिप्रमेव प्रपत्स्यसे।
जनस्थानवधं बुद्ध्वा बुद्ध्वा वालिवधं तथा॥

रामसुग्रीवसख्यं च बुध्यस्व हितमात्मनः।
कामं खल्वहमप्येकः सवाजिरथकुञ्जराम्॥

लङ्कां नाशयितुं शक्तस्तस्यैष तु न निश्चयः।
रामेण हि प्रतिज्ञातं हर्यृक्षगणसंनिधौ॥ ३२॥

उत्सादनममित्राणां सीता यैस्तु प्रधर्षिता।
अपकुर्वन्हि रामस्य साक्षादपि पुरंदरः॥३३॥

न सुखं प्राप्नुयादन्यः किं पुनस्त्वद्विधो जनः।
यां सीतेत्यभिजानासि येयं तिष्ठति ते वशे॥

कालरात्रीति तां विद्धि सर्वलङ्काविनाशिनीम् ।
तदलं कालपाशेन सीताविग्रहरूपिणा ॥ ३५ ॥

स्वयं स्कन्धावसक्तेन क्षममात्मनि चिन्त्यताम् ।
सीतायास्तेजसा दग्धां रामकोपप्रपीडिताम् ॥

दह्यमानामिमां पश्य पुरीं साट्टप्रतोलिकाम् ।
स्वानि मित्राणि मन्त्रींश्च ज्ञातीन्भ्रातॄन्सुतान्हितान् ॥

भोगान्दारांश्च लङ्कां च मा विनाशमुपानय ।
सत्य राक्षसराजेन्द्र शृणुष्व वचनं मम ३८॥

रामदासस्य दूतस्य वानरस्य विशेषतः ।
सर्वाँल्लोकान्सुसंहृत्य सभूतान्सचराचरान् ॥

पुनरेव तथा स्रष्टुं शक्तो रामो महायशाः ।
देवासुरनरेन्द्रेषु यक्षरक्षोगणेषु च ॥ ४० ॥

विद्याधरेषु सर्वेषु गन्धर्वेषूरगेषु च ।
सिद्धेषु किंनरेन्द्रेषु पतत्रिषु च सर्वतः ॥ ४१ ॥

सर्वभूतेषु सर्वत्र सर्वकालेषु नास्ति सः ।
यो रामं प्रतियुध्येत विष्णुतुल्यपराक्रमम् ॥

सर्वलोकेश्वरस्यैवं कृत्वा विप्रियमीदृशम् ।
रामस्य राजसिंहस्य दुर्लभं तव जीवितम् ॥

देवाश्च दैत्याश्च निशाचरेन्द्र
गन्धर्वविद्याधरनागयक्षाः ।
रामस्य लोकत्रयनायकस्य
स्थातुं न शक्ताः समरेषु सर्वे ॥ ४४ ॥

ब्रह्मा स्वयम्भूश्चतुराननो वा
रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वा ।
इन्द्रो महेन्द्रः सुरनायको वा
त्रातुं न शक्ता युधि रामवध्यम् ॥

स सौष्ठवोपेतमदीनवादिनः
कपेर्निशम्याप्रतिमोऽप्रियं वचः ।
दशाननः कोपविवृत्तलोचनः
समादिशत्तस्य वधं महाकपेः ॥ ४६ ॥

इति एकपञ्चाशः सर्गः ॥

—*—

## द्विपञ्चाशः सर्गः ॥



तस्य तद्वचनं श्रुत्वा वानरस्य महात्मनः ।
आज्ञापयत्तस्य वधं रावणः क्रोधमूर्छितः ॥१॥

वधे तस्य समाज्ञप्ते रावणेन दुरात्मना ।
निवेदितवतो दौत्यं नानुमेने विभीषणः ॥२॥

तं च रक्षोधिपं क्रुद्धं तच्च कार्यमुपस्थितम् ।
विदित्वा चिन्तयामास कार्यं कार्यविधौ स्थितः ॥

निश्चितार्थस्ततः साम्नापूज्य शत्रुजिदग्रजम् ।
उवाच हितमत्यर्थं वाक्यं वाक्यविशारदः ॥

क्षमस्व रोषं त्यज राक्षसेन्द्र
प्रसीद मद्वाक्यमिदं शृणुष्व ।
वधं न कुर्वन्ति परावरज्ञा
दूतस्य सन्तो वसुधाधिपेन्द्राः ॥ ५ ॥

राजधर्मविरुद्धं च लोकवृत्तेश्च गर्हितम् ।
तव चासदृशं वीर कपेरस्य प्रमापणम् ॥ ६ ॥

धर्मज्ञश्च कृतज्ञश्च राजधर्मविशारदः ।
परावरज्ञो भूतानां त्वमेव परमार्थवित् ॥ ७ ॥

गृह्यन्ते यदि रोषेण त्वादृशोऽपि विपश्चितः ।
ततः शास्त्रविपश्चित्त्व श्रम एव हि केवलम् ॥

तस्मात्प्रसीद शत्रुघ्न राक्षसेन्द्र दुरासद ।
युक्तायुक्तं विनिश्चित्य दूते दण्डो विधीयताम् ॥

विभीषणवचः श्रुत्वा रावणो राक्षसेश्वरः ।
रोषेण महताविष्टो वाक्यमुत्तरमब्रवीत् ॥१० ॥

न पापानां वधे पाप विद्यते शत्रुसूदन ।
तस्मादेन वधिष्यामि वानरं पापकारिणम् ॥

अधर्ममूलं बहुदोषयुक्त
मनार्यजुष्टं वचनं निशम्य ।
उवाच वाक्यं परमार्थतत्त्वं
विभीषणो बुद्धिमतां वरिष्ठः ॥ १२ ॥

प्रसीद लङ्केश्वर राक्षसेन्द्र
धर्मार्थयुक्तं वचनं शृणुष्व ।

दूतानवध्यान्समयेषु राज-
न्सर्वेषु सर्वत्र वदन्ति सन्तः ॥ १३ ॥

असंशयं शत्रुरयं प्रवृद्धः
कृतं ह्यनेनाप्रियमप्रमेयम् ।
न दूतवध्यां प्रवदन्ति सन्तो
दूतस्य दृष्टा बहवो हि दण्डाः ॥ १४ ॥

वैरूप्यमङ्गेषु कशाभिघातो
मौण्ड्यं तथा लक्षणसंनिपातः ।
एतान्हि दूते प्रवदन्ति दण्डा-
न्वधस्तु दूतस्य न नः श्रुतोऽपि ॥ ५ ॥

कथं च धर्मार्थविनीतबुद्धिः
परावरप्रत्ययनिश्चितार्थः ।
भवद्विधः कोपवशे हि तिष्ठे-
त्कोपं नियच्छन्ति हि सत्त्ववन्तः ॥

न धर्मवादे न च लोकवृत्ते
न शास्त्रबुद्धिग्रहणेषु चापि ।

विधेत कश्चित्तव वीर तुल्य-
स्त्वं सुतपः सर्वसुरासुराणाम् । १७ ॥

शूरेण वीरेण निशाचरेन्द्र
सुरासुराणामपि दुर्जयेन ।
त्वया प्रगल्भाः सुरदैत्यसंघा
युद्धेषु युद्धेष्वसकृन्नरेन्द्राः ॥ १८ ॥

इत्यविषह्याभरदैत्यशत्रोः
शूरस्य वीरस्य तवाजितस्य ।
कुर्वन्ति मूढा मनसो व्यलीकं
प्राणैर्वियुक्ता ननु ये कुरा ते ॥ २९ ॥

न चाप्यस्य कपेर्घाते कंचित्पश्याम्यहं गुणम् ।
तेष्वयं पात्यतां दण्डो यैरयं प्रेषितः कपिः ॥

साधुर्वा यदिवासाधुः परैरेष समर्पितः ।
ब्रुवन्परार्थं परवान्न दूतो वधमर्हति ॥ २१ ॥

अपि चास्मिन्हते राजन्नान्यं पश्यामि खेचरम् ।
इह यः पुनरागच्छेत्परं पारं महोदधेः ॥ २२ ॥

तस्मादस्य वधे यत्नः कार्यः परपुरंजय ।
सवासवेन्द्रेषु देवेषु यत्नमास्थातुमर्हति ॥ २३ ॥

अस्मिन्विनष्टे न हि दूतमन्यं
पश्यामि यस्तौ नरराजपुत्रौ ।
युद्धाय युद्धप्रिय दुर्विनीता-
वुद्योजयेद्दीर्घपथावरुद्धौ ॥ २४ ॥

अस्मिन्हते वानरयूथमुख्ये
सर्वापवाद् प्रवदन्ति सर्वे ।
न हि प्रपश्यामि गुणान्यशो वा
लोकापवादो भवति प्रसिद्धः ॥ २५ ॥

पराक्रमोत्साहमनस्विनां च
सुरासुराणामपि दुर्जयेन ।
त्वया मनोनन्दन नैर्ऋतानां
युद्धायतिर्नाशयितु न युक्ता ॥ २६ ॥

हिताश्च शूराश्च समाहिताश्च
कुलेषु जाताश्च महागुणेषु ।

मनस्विनः शस्त्रभृतां वरिष्ठाः
कोट्यग्रतस्ते सुभृताश्च योधाः ॥ २७ ॥

तदेकदेशेन बलस्य ताव-
त्केचित्त्वदादेशकृतोऽभियान्तु ।
तौ राजपुत्रौ विनिगृह्य मूढौ
परेषु ते भावयितुं प्रभावम् ॥ २८ ॥

तस्यानुजस्याधिकमर्थतत्त्व
विभीषणस्योत्तमवाक्यमिष्टम् ।
जग्राह बुद्ध्या सुरलोकशत्रु-
र्महाबलो राक्षसराजमुख्यः ॥ २९ ॥

क्रोध च जात हृदये निरुध्य
विभीषणोक्त वचन सुपूज्य ।
उवाच रक्षोऽधिपतिर्महात्मा
विभीषणं शस्त्रभृतां वरिष्ठम् ॥ ३० ॥

इति द्विपञ्चाशः सर्गः ॥

## त्रिपञ्चाशः सर्गः ॥



तस्य तद्वचनं श्रुत्वा दशग्रीवो महात्मनः ।
देशकालहितं वाक्यं भ्रातुरुत्तरमब्रवीत् ॥ १ ॥

सम्यगुक्तं हि भवता दूतवध्या विगर्हिता ।
अवश्यं तु वधादन्यः क्रियतामस्य निग्रहः ॥२॥

कपीनां किल लाङ्गूलमिष्टं भवति भूषणम् ।
तदस्य दीप्यतां शीघ्रं तेन दग्धेन गच्छतु ॥

ततः पश्यन्त्विमं दीनमङ्गवैरूप्यकर्शितम्
समित्रा ज्ञातयः सर्वे बान्धवाः ससुहृज्जनाः ।

आज्ञापयद्राक्षसेन्द्रः पुरं सर्वं सचत्वरम्
लाङ्गूलेन प्रदीप्तेन रक्षोभिः परिणीयताम् ॥

तस्य तद्वचनं श्रुत्वा राक्षसाः कोपकर्कशाः ।
वेष्टयन्ति स्म लाङ्गूलं जीर्णैः कार्पासिकैः पटैः ॥

संवेष्ट्यमाने लाङ्गूले व्यवर्धत महाकपिः ।
शुष्कमिन्धनमासाद्य वनेष्विव हुताशनः ॥

तैलेन परिषिच्याथ तेऽग्निं तत्राभ्यपातयन् ।
लाङ्गूलेन प्रदीप्तेन राक्षसांस्तानपातयत् ॥ ८ ॥

स तु रोषपरीतात्मा बालसूर्यसमाननः ।
लाङ्गूलं संप्रदीप्तं तद्दृष्ट्वा तस्य हनूमतः ॥ ९ ॥

सहस्त्रीबालवृद्धाश्च जग्मुः प्रीतिं निशाचराः ।
स भूयः संगतैः क्रूरै राक्षसैर्हरिसत्तमः ॥ १० ॥

निबद्धः कृतवान्वीरस्तत्कालसदृशीं मतिम् ।
कामं खलु न मे शक्ता निबद्धस्यापि राक्षसाः ॥

छित्त्वा पाशान्समुत्पत्य हन्यामहमिमान्पुनः ।
यदि भर्तृहितार्थाय चरन्तं भर्तृशासनात् ॥

बध्नन्त्येते दुरात्मानो न तु मे निष्कृतिः कृता ।
सर्वेषामेव पर्याप्तो राक्षसानामहं युधि ॥ १३ ॥

रामस्य किं तु प्रीत्यर्थं विषहिष्येऽहमीदृशम् ।
लङ्का चारयितव्या वै पुनरेव भवेदिति ॥ १४ ॥

रात्रौ न हि सुदृष्टा मे दुर्गकर्मविधानतः ।
अवश्यमेव द्रष्टव्या मया लङ्का निशाक्षये ॥

कामं बन्धैश्च मे भूयः पुच्छस्योद्दीपनेन च ।
पीडां कुर्वन्तु रक्षांसि न मेऽस्ति मनसः श्रमः ॥

ततस्ते संवृताकारं सत्त्ववन्तं महाकपिम् ।
परिगृह्य ययुर्हृष्टा राक्षसाः कपिकुञ्जरम् ॥१७॥

शङ्खभेरीनिनादैश्च घोषयन्तः स्वकर्मभिः ।
राक्षसाः क्रूरकर्माणश्चारयन्ति स्म तां पुरीम् ॥

अन्वीयमानो रक्षोभिर्ययौ सुखमरिन्दमः ।
हनुमांश्चारयामास राक्षसानां महापुरीम् ॥

अथापश्यद्विमानानि विचित्राणि महाकपिः ।
संवृतान्भूमिभागांश्च सुविभक्तांश्च चत्वरान् ॥

वीथीश्च गृहसंबाधा अपि शृङ्गाटकानि च ।
तथा रथ्योपरथ्याश्च तथैव गृहकान्तरान् ॥

गृहांश्च मेघसंकाशान्ददर्श पवनात्मजः ।
चत्वरेषु चतुष्केषु राजमार्गे तथैव च ॥ २२ ॥

घोषयन्ति कपिं सर्वे चारीक इति राक्षसाः ।
स्त्रीबालवृद्धा निर्जग्मुस्तत्र तत्र कुतूहलात् ॥

तं प्रदीपितलाङ्गूलं हनुमन्तं विहङ्गमः ।
दीप्यमाने ततस्तस्य लाङ्गूलाग्रे हनूमतः ॥

राक्षस्यस्ता विरूपाक्ष्यः शंसुर्देव्यास्तदप्रियम् ।
यस्त्वया कृतसंवादः सीते ताम्रमुखः कपिः ॥

लाङ्गूलेन प्रदीप्तेन स एष परिणीयते
श्रुत्वा तद्वचनं क्रूरमात्मापहरणोपमम् ॥ २६ ॥

वैदेही शोकसंतप्ता हुताशनमुपागमत्
मङ्गलाभिमुखी तस्य सा तदासीन्महाकपेः ॥

उपतस्थे विशालाक्षी प्रयता हव्यवाहनम् ।
यद्यस्ति पतिशुश्रूषा यद्यस्ति चरितं तपः ॥

यदि चास्त्येकपत्नीत्वं शीतो भव हनूमतः ।
यदि किंचिदनुक्रोशस्तस्य मय्यस्ति धीमतः ॥

यदि वा भाग्यशेषो मे शीतो भव हनूमतः ।
यदि मां वृत्तसंपन्नां तत्समागमलालसाम् ॥

स विजानाति धर्मात्मा शीतो भव हनूमतः ।
यदि मां तारयेदार्यः सुग्रीवः सत्यसंगरः ॥

अस्माद्दुःखाम्बुसंरोधाच्छीतो भव हनूमतः।
ततस्तीक्ष्णार्चिरव्यग्रः प्रदक्षिणशिखोऽनलः॥

जज्वाल मृगशावाक्ष्याः शंसन्निव शिवं कपेः।
हनुमज्जनकश्चापि पुच्छानलयुतोऽनिलः॥

ववौ स्वास्थ्यकरो देव्याः प्रालेयानिलशीतलः।
दह्यमाने च लाङ्गूले चिन्तयामास वानरः॥

प्रदीप्तोऽग्निरयं कस्मान्न मां दहति सर्वतः
दृश्यते च महाज्वालो न करोति च मे रुजम्॥

शिशिरस्येव संपातो लाङ्गूलाग्रे प्रतिष्ठितः।
अथ वा तदिदं व्यक्तं यद्दृष्टं प्लवता मया।

रामप्रभावादाश्चर्यं पर्वतः सरितां पतौ।
यदि तावत्समुद्रस्य मैनाकस्य च धीमतः॥

रामार्थं संभ्रमस्तादृक्किमग्निर्न करिष्यति।
सीतायाश्चानृशंस्येन तेजसा राघवस्य च॥

पितुश्च मम सख्येन न मां दहति पावकः।
भूयः स चिन्तयामास मुहूर्तं कपिकुञ्जरः॥

उत्पपाताथ वेगेन ननाद च महाकपिः ।
बुरद्वार ततः श्रीमाञ्शैलशृङ्गमिवोन्नतम् ॥४०॥

विभक्तरक्षःसंबाधमाससादानिलात्मजः ।
स भूत्वा शैलसंकाशः क्षणेन पुनरात्मवान् ॥

ह्रस्वतां परमां प्राप्तो बन्धनान्यवशातयत् ।
विमुक्तश्चाभवच्छ्रीमान्पुनः पर्वतसंनिभः ॥४२॥

वीक्षमाणश्च ददृशे परिघं तोरणाश्रितम् ।
स तं गृह्य महाबाहुः कालायसपरिष्कृतम् ।
रक्षिणस्तान्पुनः सर्वान्सूदयामास मारुतिः ॥

स तान्निहत्वा रणचण्डविक्रमः
समीक्षमाणः पुनरेव लङ्काम् ।
प्रदीप्तलाङ्गूलकृतार्चिमाली
प्रकाशतादित्य इवार्चिमाली ॥ ४४ ॥

इति त्रिपञ्चाश सर्ग ॥





## चतुःपञ्चाशः सर्गः ॥

वीक्षमाणस्ततो लङ्कां कपिः कृतमनोरथः ।
वर्धमानसमुत्साहः कार्यशेषमचिन्तयत् ॥ १ ॥

किं नु खल्ववशिष्टं मे कर्तव्यमिह सांप्रतम् ।
यदेषां रक्षसां भूयः संतापजननं भवेत् ॥ २ ॥

वनं तावत्प्रमथितं प्रकृष्टा राक्षसा हताः ।
बलैकदेशः क्षपितः शेषं दुर्गविनाशनम् ॥ ३ ॥

दुर्गे विनाशिते कर्म भवेत्सुखपरिश्रमम् ।
अल्पयत्नेन कार्येऽस्मिन्मम स्यात्सफलः श्रमः ॥

यो ह्ययं मम लाङ्गूले दीप्यते हव्यवाहनः ।
अस्य संतर्पणं न्याय्यं कर्तुमेभिर्गृहोत्तमैः ॥५॥

ततः प्रदीप्तलाङ्गूलः सविद्युदिव तोयदः ।
भवनाग्रेषु लङ्कायाः विचचार महाकपिः ॥ ६ ॥

गृहाद्गृहं राक्षसानामुद्यानानि च वानरः ।
वीक्षमाणो ह्यसंत्रस्तः प्रासादांश्च चचार सः ॥

अवप्लुत्य महावेगः प्रहस्तस्य निवेशनम् ।
अग्निं तत्र स निक्षिप्य श्वसनेन समो बली ॥

ततोऽन्यत्पुप्लुवे वेश्म महापार्श्वस्य वीर्यवान् ।
मुमोच हनुमानग्निं कालानलशिखोपमम् ॥९॥

वज्रदंष्ट्रस्य च तथा पुप्लुवे स महाकपिः ।
शुकस्य च महातेजाः सारणस्य च धीमतः ॥

तथा चेन्द्रजितो वेश्म ददाह हरियूथपः ।
जम्बुमालेः सुमालेश्च ददाह भवनं ततः ॥

रश्मिकेतोश्च भवनं सूर्यशत्रोस्तथैव च ।
ह्रस्वकर्णस्य दंष्ट्रस्य रोमशस्य च रक्षसः ॥

युद्धोन्मत्तस्य मत्तस्य ध्वजग्रीवस्य रक्षसः ।
विद्युज्जिह्वस्य घोरस्य तथा हस्तिमुखस्य च ॥

करालस्य पिशाचस्य शोणिताक्षस्य चैव हि ।
कुम्भकर्णस्य भवनं मकराक्षस्य चैव हि ॥

यज्ञशत्रोश्च भवनं ब्रह्मशत्रोस्तथैव च ।
नरान्तकस्य कुम्भस्य निकुम्भस्य दुरात्मनः ॥

वर्जयित्वा महातेजा विभीषणगृहं प्रति ।
क्रममाणः क्रमेणैव ददाह हरिपुंगवः ॥ १६ ॥

तेषु तेषु महार्हेषु भवनेषु महायशाः ।
गृहेष्वृद्धिमतामृद्धिं ददाह स महाकपिः ॥१७॥

सर्वेषां समतिक्रम्य राक्षसेन्द्रस्य वीर्यवान् ।
आससादाथ लक्ष्मीवान्रावणस्य निवेशनम् ॥

ततस्तस्मिन्गृहे मुख्ये नानारत्नविभूषिते ।
मेरुमन्दरसंकाशे सर्वमङ्गलशोभिते ॥ १९ ॥

प्रदीप्तमग्निमुत्सृज्य लाङ्गूलाग्रे प्रतिष्ठितम् ।
ननाद हनुमान्वीरो युगान्ते जलदो यथा ॥

श्वसनेन च संयोगादतिवेगो महाबलः ।
कालाग्निरिव संदीप्तः प्रावर्धत हुताशनः ॥

प्रवृद्धमग्निं पवनस्तेषु वेश्मसु चारयन् ।
अभूच्छ्वसनसंयोगादतिवेगो हुताशनः ॥ २२ ॥

तानि काञ्चनजालानि मुक्तामणिमयानि च ।
भवनान्यवशीर्यन्त रत्नवन्ति महान्ति च ॥

तानि भग्नविमानानि निपेतुर्धरणीतले ।
भवनानीव सिद्धानामम्बरात्पुण्यसंक्षये ॥ २४ ॥

संजज्ञे तुमुलः शब्दो राक्षसानां प्रधावताम् ।
स्वगृहस्य परित्राणे भग्नोत्साहोर्जितश्रियाम् ॥

नूनमेषोऽग्निरायातः कपिरूपेण हा इति ।
क्रन्दन्त्यः सहसा पेतुः स्तनंधयधराः स्त्रियः ॥

काश्चिदग्निपरीतेभ्यो हर्म्येभ्यो मुक्तमूर्धजाः ।
पतन्त्यो रेजिरेऽभ्रेभ्यः सौदामिन्य इवाम्बरात् ॥

वज्रविद्रुमवैडूर्यमुक्तारजतसंहितान् ।
विचित्रान्भवनान्धातून्स्यन्दमानान्ददर्श सः ॥

नाग्निस्तृप्यति काष्ठानां तृणानां च यथा तथा ।
हनूमान्राक्षसेन्द्राणां वधे किंचिन्न तृप्यति ॥

न हनूमद्विशस्तानां राक्षसानां वसुंधरा ।
क्वचित्किंशुकसंकाशाः क्वचिच्छाल्मलिसंनिभाः

क्वचित्कुङ्कुमसंकाशाः शिखा वह्नेश्चकाशिरे ।
हनूमता वेगवता वानरेण महात्मना ।
लङ्कापुरं प्रदग्ध तद्रुद्रेण त्रिपुर यथा ॥ ३१ ॥

ततस्तु लङ्कापुरपर्वताग्रे
समुत्थितो भीमपराक्रमोऽग्निः ।
प्रसार्य चूडावलयं प्रदीप्तो
हनूमता वेगवता विसृष्टः ॥ ३२ ॥

युगान्तकालानलतुल्यवेगः
समारुतोऽग्निर्ववृधे दिविस्पृक् ।

विधूमरश्मिर्भवनेषु सक्तो
   रक्षःशरीराज्यसमर्पितार्चिः ॥ १३ ॥

आदित्यकोटीसदृशः सुतेजा
   लङ्कां समस्तां परिवार्य तिष्ठन् ।
शब्दैरनेकैरशनिप्रकाशै-
   र्भिन्दन्निवाण्डं प्रबभौ महाग्निः ॥ १४ ॥

तत्राम्बरादग्निरतिप्रवृद्धो
   रूक्षप्रभः किंशुकपुष्पचूडः ।
निर्वाणधूमाकुलराजयश्च
   नीलोत्पलाभाः प्रचकाशिरेऽभ्राः ॥

वज्री महेन्द्रस्त्रिदशेश्वरो वा
   साक्षाद्यमो वा वरुणोऽनिलो वा ।
   ऽग्निरर्को धनदश्च सोमः
   न वानरोऽयं स्वयमेव कालः ॥ १५ ॥

किं ब्रह्मणः सर्वपितामहस्य
   सर्वस्य धातुश्चतुराननस्य ।

इहागतो वानररूपधारी
रक्षोपसंहारकरः प्रकोपः ॥ ३७ ॥

किं वैष्णवं वा कपिरूपमेत्य
रक्षोविनाशाय परं सुतेजः ।
अनन्तमव्यक्तमचिन्त्यमेकं
स्वमायया सांप्रतमागतं वा ॥ ३८ ॥

इत्येवमूचुर्बहवो विशिष्टा
रक्षोगणास्तत्र समेत्य सर्वे ।
सप्राणिसङ्घां सगृहां सवृक्षां
दग्धां पुरीं तां सहसा समीक्ष्य ॥

ततस्तु लङ्का सहसा प्रदग्धा
सराक्षसा साश्वरथा सनागा ।
सपक्षिसंघा समृगा सवृक्षा
रुरोद दीना तुमुलं सशब्दम् ॥ ४० ॥

हा तात हा पुत्रक कान्त मित्र
हा जीवितं भोगयुतं सुपुण्यम् ।

रक्षोभिरेवं बहुधा ब्रुवाद्भिः
शब्दः कृतो घोरतरः सुभीमः ॥ ४१ ॥

हुताशनज्वालसमावृता सा
हतप्रवीरा परिवृत्तयोधा
हनूमतः क्रोधबलाभिभूता
बभूव शापोपहतेव लङ्का ॥ ४२ ॥

स संभ्रमत्रस्तविषण्णराक्षसां
समुज्ज्वलज्ज्वालहुताशनाङ्किताम् ।
ददर्श लङ्कां हनुमान्महामनाः
स्वयम्भुकोपोपहतामिवावनिम् ॥ ४३ ॥

भङ्क्त्वा वनं पादपरत्नसङ्कुलं
हत्वा तु रक्षांसि महान्ति संयुगे ।
दग्ध्वा पुरीं तां गृहरत्नमालिनीं
तस्थौ हनूमान्पवनात्मजः कपिः ॥४४॥

त्रिकूटशृङ्गाग्रतले विचित्रे
प्रतिष्ठितो वानरराजसिंहः ।

प्रदीप्तलाङ्गूलकृतार्चिमाली
व्यराजतादित्य इवांशुमाली ॥ ४५ ॥

स राक्षसांस्तान्सुबहूंश्च हत्वा
वनं च भङ्क्त्वा बहुपादपं तत् ।
विसृज्य रक्षोभवनेषु चाग्निं
जगाम रामं मनसा महात्मा ॥ ४६ ॥

ततस्तु तं वानरवीरमुख्यं
महाबलं मारुततुल्यवेगम् ।
महामतिं वायुसुतं वरिष्ठं
प्रतुष्टुवुर्देवगणाश्च सर्वे ॥ ४७ ॥

भङ्क्त्वा वनं महातेजा हत्वा रक्षांसि संयुगे ।
दग्ध्वा लङ्कापुरीं रम्यां रराज स महाकपिः ॥

तत्र देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
दृष्ट्वा लङ्कां प्रदग्धां तां विस्मयं परमं गताः ॥

तं दृष्ट्वा वानरश्रेष्ठं हनुमन्तं महाकपिम् ।
कालाग्निरिति संचिन्त्य सर्वभूतानि तत्रसुः ॥

देवाश्च सर्वे मुनिपुंगवाश्च
गन्धर्वविद्याधरकिंनराश्च ।
भूतानि सर्वाणि महान्ति तत्र
जग्मुः परां प्रीतिमतुल्यरूपाम् ॥ ५१ ॥

इति चतु पञ्चाश सर्गः ॥

---

## पञ्चपञ्चाशः सर्गः ॥

---

लङ्कां समस्तां संदीप्य लाङ्गूलाग्निं महाबलः ।
निर्वापयामास तदा समुद्रे हरिसत्तमः ॥ १ ॥

संदीप्यमानां विध्वस्तां त्रस्तरक्षोगणां पुरीम् ।
अवेक्ष्य हनुमाँल्लङ्कां चिन्तयामास वानरः ॥

तस्याभूत्सुमहांस्त्रासः कुत्सा चात्मन्यजायत ।
लङ्कां प्रदहता कर्म किं स्वित्कृतमिदं मया ॥

धन्यास्ते पुरुषश्रेष्ठा ये बुद्ध्या कोपमुत्थितम् ।
निरुन्धन्ति महात्मानो दीप्तमग्निमिवाम्भसा ॥

क्रुद्धः पापं न कुर्यात्कः क्रुद्धो हन्याद्गुरूनपि ।
क्रुद्धः परुषया वाचा नरः साधूनधिक्षिपेत् ॥

वाच्यावाच्यं प्रकुपितो न विजानाति कर्हिचित् ।
नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते क्वचित् ॥

यः समुत्पतितं क्रोधं क्षमयैव निरस्यति ।
यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥

धिगस्तु मां सुदुर्बुद्धिं निर्लज्जं पापकृत्तमम् ।
अचिन्तयित्वा तां सीतामग्निदं स्वामिघातकम् ॥

यदि दग्धा त्वियं लङ्का नूनमार्यापि जानकी ।
दग्धा तेन मया भर्तुर्हतं कार्यमजानता ॥ ९ ॥

यदर्थमयमारम्भस्तत्कार्यमवसादितम् ।
मया हि दहता लङ्कां न सीता परिरक्षिता ॥

ईषत्कार्यमिदं कार्यं कृतमासीन्न संशयः ।
तस्य क्रोधाभिभूतेन मया मूलक्षयः कृतः ॥

विनष्टा जानकी नूनं न ह्यदग्धः प्रदृश्यते ।
लङ्कायां कश्चिदुद्देशः सर्वा भस्मीकृता पुरी ॥

यदि तद्विहतं कार्यं मम प्रज्ञाविपर्ययात् ।
इहैव प्राणसन्यासो ममापि ह्यद्य रोचते ॥

किमग्नौ निपताम्यद्य आहोस्विद्वडवामुखे ।
शरीरमाहो सत्त्वानां दद्मि सागरवासिनाम् ॥

कथं हि जीवता शक्यो मया द्रष्टुं हरीश्वरः ।
तौ वा पुरुषशार्दूलौ कार्यसर्वस्वघातिना ॥

मया खलु तदेवेदं रोषदोषात्प्रदर्शितम् ।
प्रथितं त्रिषु लोकेषु कपित्वमनवस्थितम् ॥

धिगस्तु राजसं भावमनीशमनवस्थितम् ।
ईश्वरेणापि यद्रागान्मया सीता न रक्षिता ॥

विनष्टायां तु सीतायां तावुभौ विनशिष्यतः ।
तयोर्विनाशे सुग्रीवः सबन्धुर्विनशिष्यति ॥

एतदेव वचः श्रुत्वा भरतो भ्रातृवत्सलः ।
धर्मात्मा सहशत्रुघ्नः कथं शक्ष्यति जीवितुम् ॥

इक्ष्वाकुवंशे धर्मिष्ठे गते नाशमसंशयम् ।
भविष्यन्ति प्रजाः सर्वाः शोकसंतापपीडिताः ॥

तदहं भाग्यरहितो लुप्तधर्मार्थसंग्रहः ।
रोषदोषपरीतात्मा व्यक्तं लोकविनाशनः ॥

इति चिन्तयतस्तस्य निमित्तान्युपपेदिरे ।
पूर्वमप्युपलब्धानि साक्षात्पुनरचिन्तयत् ।

अथ वा चारुसर्वाङ्गी रक्षिता स्वेन तेजसा ।
न नशिष्यति कल्याणी नाग्निरग्नौ प्रवर्तते ॥

न हि धर्मात्मनस्तस्य भार्याममिततेजसः ।
स्वचारित्राभिगुप्तां तां स्प्रष्टुमर्हति पावकः ॥

नूनं रामप्रभावेण वैदेह्याः सुकृतेन च ।
यन्मां दहनकर्मायं नादहद्धव्यवाहनः ॥ २१ ॥

त्रयाणां भरतादीनां भ्रातॄणां देवता च या ।
रामस्य च मनःकान्ता सा कथं विनशिष्यति ॥

यद्वा दहनकर्मायं सर्वत्र प्रभुरव्ययः ।
न मे दहति लाङ्गूलं कथमार्यां प्रधक्ष्यति ॥

पुनश्चाचिन्तयत्तत्र हनुमान्विस्मितस्तदा ।
हिरण्यनाभस्य गिरेर्जलमध्ये प्रदर्शनम् ॥२४॥

तपसा सत्यवाक्येन अनन्यत्वाच्च भर्तरि ।
अपि सा निर्दहेदग्निं न तामग्निः प्रधक्ष्यति ॥

स तथा चिन्तयंस्तत्र देव्या धर्मपरिग्रहम् ।
शुश्राव हनुमान्वाक्यं चारणानां महात्मनाम् ॥

अहो खलु कृतं कर्म दुष्करं हि हनूमता ।
अग्निं विसृजताभीक्ष्णं भीमं राक्षसवेश्मनि ॥

प्रपलायितरक्षःस्त्रीबालवृद्धसमाकुला ।
जनकोलाहलाध्माता क्रन्दन्तीवाद्रिकंदरे ॥

दग्धेयं नगरी सर्वा साट्टप्राकारतोरणा ।
जानकी न च दग्धेति विस्मयोऽद्भुत एव नः ॥

स निमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः ।
ऋषिवाक्यैश्च हनुमानभवत्प्रीतमानसः ॥

ततः कपिः प्राप्तमनोरथार्थ-
स्तामक्षतां राजसुतां विदित्वा ।
प्रत्यक्षतस्तां पुनरेव दृष्ट्वा
प्रतिप्रयाणाय मतिं चकार ॥ ३५ ॥

इति पञ्चपञ्चाशः सर्गः ॥

## षट्पञ्चाशः सर्गः ॥

---

ततस्तां शिंशुपामूले जानकीं पर्यवस्थिताम्
अभिवाद्याब्रवीद्दिष्ट्या पश्यामि त्वामिहाक्षताम्

ततस्तं प्रस्थितं सीता वीक्षमाणा पुनः पुनः ।
भर्तुस्नेहान्वितं वाक्यं हनूमन्तमभाषत ॥ २ ॥

काममस्य त्वमेवैकः कार्यस्य परिसाधने ।
पर्याप्तः परवीरघ्न यशस्यस्ते बलोदयः ॥ ३ ॥

शरैः सुसंकुलां कृत्वा लङ्कां परबलार्दनः ।
मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥

तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः ।
भवेदाहवशूरस्य तथा त्वमुपपादय ॥ ५ ॥

तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम् ।
निशम्य हनुमांस्तस्या वाक्यमुत्तरमब्रवीत् ॥

क्षिप्रमेष्यति काकुत्स्थो हर्यृक्षप्रवरैर्वृतः ।
यस्ते युधि विजित्यारीञ्शोकं व्यपनयिष्यति ॥

एवमाश्वास्य वैदेहीं हनूमान्मारुतात्मजः ।
गमनाय मतिं कृत्वा वैदेहीमभ्यवादयत् ॥ ८ ॥

ततः स कपिशार्दूलः स्वामिसंदर्शनोत्सुकः ।
आरुरोह गिरिश्रेष्ठमरिष्टमरिमर्दनः ॥ ९ ॥

तुङ्गपद्मकजुष्टाभिर्नीलाभिर्वनराजिभिः ।
सोत्तरीयमिवाम्भोदैः शृङ्गान्तरविलम्बिभिः ॥

बोध्यमानमिव प्रीत्या दिवाकरकरैः शुभैः ।
उन्मिषन्तमिवोद्धूतैर्लोचनैरिव धातुभिः ॥ ११ ॥

तोयौघनिःस्वनैर्मन्द्रैः प्राधीतमिव सर्वतः ।
प्रगीतमिव विस्पष्टैर्नानाप्रस्रवणस्वनैः ॥ १२ ॥

देवदारुभिरत्युच्चैरूर्ध्वबाहुमिव स्थितम् ।
प्रपातजलनिर्घोषैः प्राकुष्टमिव सर्वतः ॥ १३ ॥

वेपमानमिव श्यामैः कम्पमानैः शरद्वनैः ।
वेणुभिर्मारुतोद्धूतैः कूजन्तमिव कीचकैः ।

निःश्वसन्तमिवामर्षाद्घोरैराशीविषोत्तमैः ।
नीहारकृतगम्भीरैर्ध्यायन्तमिव गह्वरैः ॥ १५ ॥

मेघपादनिभैः पादैः प्रक्रान्तमिव सर्वतः ।
जृम्भमाणमिवाकाशे शिखरैरभ्रमालिभिः ।

कूटैश्च बहुधाकीर्णैः शोभितं बहुकन्दरैः ।
सालतालाश्वकर्णैश्च वंशैश्च बहुभिर्वृतम् ॥१७॥

लतावितानैर्विततैः पुष्पवद्भिरलंकृतम् ।
नानामृगगणाकीर्णं धातुनिष्यन्दभूषितम् ॥

बहुप्रस्रवणोपेतं शिलासंचयसंकटम् ।
महर्षियक्षगन्धर्वकिंनरोरगसेवितम् ॥ १९ ॥

लतापादपसंबाधं सिंहाध्युषितकंदरम् ।
व्याघ्रसंघसमाकीर्णं स्वादुमूलफलोदकम् ॥

तमारुरोह हनुमान्पर्वतं प्लवगोत्तमः ।
रामदर्शनशीघ्रेण प्रहर्षेणाभिचोदितः ॥ २१

तेन पादतलाक्रान्ता रम्येषु गिरिसानुषु ।
सघोषाः समशीर्यन्त शिलाश्चूर्णीकृतास्ततः ॥

स तमारुह्य शैलेन्द्रं व्यवर्धत महाकपिः ।
दक्षिणादुत्तरं पारं प्रार्थयँल्लवणाम्भसः ॥२३॥

अधिरुह्य ततो वीरः पर्वतं पवनात्मजः ।
ददर्श सागरं भीमं मीनोरगनिषेवितम् ॥२४॥

स मारुत इवाकाशं मारुतस्यात्मसंभवः ।
प्रपेदे हरिशार्दूलो दक्षिणादुत्तरां दिशम् ॥

स तदा पीडितस्तेन कपिना पर्वतोत्तमः ।
ररास सह तैर्भूतैः प्रविशन्वसुधातलम् ॥२६॥

कम्पमानैश्च शिखरैः पतद्भिरपि च द्रुमैः ।
तस्योरुवेगोन्मथिताः पादपाः पुष्पशालिनः ॥

निपेतुर्भूतले रुग्णाः शक्रायुधहता इव ।
कन्दरोदरसंस्थानां पीडितानां महौजसाम् ॥

सिंहानां निनदो भीमो नभो भिन्दन्स शुश्रुवे ।
स्रस्तव्याविद्धवसना व्याकुलीकृतभूषणाः ॥

विद्याधर्यः समुत्पेतुः सहसा धरणीधरात् ।
अतिप्रमाणा बलिनो दीप्तजिह्वा महाविषाः ॥

निपीडितशिरोग्रीवा व्यवेष्टन्त महाहयः ।
किंनरोरगगन्धर्वयक्षविद्याधरास्तदा ॥ ३१ ॥

पीडितं स नगवरं त्यक्त्वा गगनमास्थितः ।
स च भूमिधरः श्रीमान्वलिना तेन पीडितः ॥

सवृक्षशिखरोदग्रः प्रविवेश रसातलम् ।
दशयोजनविस्तारस्त्रिंशद्योजनमुच्छ्रितः ॥

धरण्यां समतां यातः स बभूव धराधरः ।
स लिलङ्घयिषुर्भीमं सलीलं लवणार्णवम् ।
कल्लोलास्फालवेलान्तमुत्पपात नभो हरिः ॥

इति षट्पञ्चाशः सर्गः ॥

---

## सप्तपञ्चाशः सर्गः ॥

---

सचन्द्रकुमुदं रम्यं सार्ककारण्डवं शुभम् ।
तिष्यश्रवणकादम्बमभ्रशैवालशाद्वलम् ॥ १ ॥

पुनर्वसुमहामीनं लोहिताङ्गमहाग्रहम् ।
ऐरावतमहाद्वीपं स्वातीहंसविलोलितम् ॥ २ ॥

वातसंघातजातोर्मि चन्द्रांशुशिशिराम्बुमत् ।
भुजंगयक्षगन्धर्वप्रबुद्धकमलोत्पलम् ॥ ३ ॥

हनुमान्मारुतगतिर्महानौरिव सागरम् ।
अपारमपरिश्रान्तः पुप्लुवे गगनार्णवम् ॥ ४ ॥

ग्रसमान इवाकाशं ताराधिपमिवोल्लिखन् ।
हरन्निव सनक्षत्रं गगनं सार्कमण्डलम् ॥ ५ ॥

मारुतस्यात्मजः श्रीमान्कपिर्व्योमचरो महान् ।
हनुमान्मेघजालानि विकर्षन्निव गच्छति ॥ ६ ॥

पाण्डरारुणवर्णानि नीलमाञ्जिष्ठकानि च ।
हरितारुणवर्णानि महाभ्राणि चकाशिरे ॥ ७ ॥

प्रविशन्नभ्रजालानि निष्क्रामंश्च पुनः पुनः ।
प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते ॥ ८ ॥

विविधाभ्रघनापन्नगोचरो धवलाम्बरः ।
दृश्यादृश्यतनुर्वीरस्तदा चन्द्रायतेऽम्बरे ॥ ९ ॥

तार्क्ष्यायमाणो गगने बभासे वायुनन्दनः ।
दारयन्मेघवृन्दानि निष्पतंश्च पुनः पुनः ॥

नदन्नादेन महता मेघस्वनमहास्वनः ।
प्रवरान्राक्षसान्हत्वा नाम विश्राव्य चात्मनः ॥

आकुलां नगरीं कृत्वा व्यथयित्वा च रावणम् ।
अर्दयित्वा बलं घोरं वैदेहीमभिवाद्य च ॥१२॥

आजगाम महातेजाः पुनर्मध्येन सागरम् ।
पर्वतेन्द्रं सुनाभं च समुपस्पृश्य वीर्यवान् ॥१३॥

ज्यामुक्त इव नाराचो महावेगोऽभ्युपागतः ।
स किंचिदनुसंप्राप्तः समालोक्य महागिरिम् ॥

महेन्द्रं मेघसंकाशं ननाद हरिपुंगवः ।
स पूरयामास कपिर्दिशो दश समन्ततः ॥१५॥

नदन्नादेन महता मेघस्वनमहास्वनः ।
स तं देशमनुप्राप्तः सुहृद्दर्शनलालसः ॥१६॥

ननाद हरिशार्दूलो लाङ्गूलं चाप्यकम्पयत् ।
तस्य नानद्यमानस्य सुपर्णचरिते पथि ॥१७॥

फलतीवास्य घोषेण गगनं सार्कमण्डलम् ।
ये तु तत्रोत्तरे तीरे समुद्रस्य महाबलाः ॥१८॥

पूर्वं संविष्ठिताः शूरा वायुपुत्रदिदृक्षवः ।
महतो वायुनुन्नस्य तोयदस्येव गर्जितम् ॥१९॥

शुश्रुवुस्ते तदा घोषमूरुवेगं हनूमतः ।
ते दीनवदनाः सर्वे शुश्रुवुः काननौकसः ॥२०॥

वानरेन्द्रस्य निर्घोषं पर्जन्यनिनदोपमम् ।
निशम्य नदतो नादं वानरास्ते समन्ततः ॥

बभूवुरुत्सुकाः सर्वे सुहृद्दर्शनकाङ्क्षिणः ।
जाम्बवांस्तु हरिश्रेष्ठः प्रीतिसंहृष्टमानसः ॥२२॥

उपामन्त्र्य हरीन्सर्वानिदं वचनमब्रवीत् ।
सर्वथा कृतकार्योऽसौ हनूमान्नात्र संशयः ॥

न ह्यस्याकृतकार्यस्य नाद एवंविधो भवेत् ।
तस्य बाहूरुवेगं च निनादं च महात्मनः ॥

निशम्य हरयो हृष्टाः समुत्पेतुस्ततस्ततः ।
ते नगाग्रान्नगाग्राणि शिखराच्छिखराणि च ॥

प्रहृष्टाः समपद्यन्त हनूमन्तं दिदृक्षवः ।
ते प्रीताः पादपाग्रेषु गृह्य शाखाः सुपुष्पिताः ॥

वासांसीव प्रशाखाश्च समाविध्यन्त वानराः ।
गिरिगह्वरसंलीनो यथा गर्जति मारुतः ॥ २७॥

एवं जगर्ज बलवान्हनूमान्मारुतात्मजः ।
तमभ्रघनसंकाशमापतन्तं महाकपिम् ॥ २८

दृष्ट्वा ते वानराः सर्वे तस्थुः प्राञ्जलयस्तदा ।
ततस्तु वेगवांस्तस्य गिरेर्गिरिनिभः कपिः ॥

निपपात महेन्द्रस्य शिखरे पादपाकुले ।
हर्षेणापूर्यमाणोऽसौ रम्ये पर्वतनिर्झरे ॥ ३० ॥

छिन्नपक्ष इवाकाशात्पपात धरणीधरः ।
ततस्ते प्रीतमनसः सर्वे वानरपुंगवाः । ३१ ॥

हनूमन्तं महात्मानं परिवार्योपतस्थिरे ।
परिवार्य च ते सर्वे परां प्रीतिमुपागताः ॥

प्रहृष्टवदनाः सर्वे तमरोगमुपागतम् ।
उपायनानि चादाय मूलानि च फलानि च ॥

प्रत्यर्चयन्हरिश्रेष्ठं हरयो मारुतात्मजम् ।
हनूमांस्तु गुरून्वृद्धाञ्जाम्बवत्प्रमुखांस्तदा ॥

कुमारमङ्गदं चैव सोऽवन्दत महाकपिः ।
स ताभ्यां पूजितः पूज्यः कपिभिश्च प्रसादितः ॥

दृष्टा सीतेति विक्रान्तः संक्षेपेण न्यवेदयत् ।
निषसाद च हस्तेन गृहीत्वा वालिनः सुतम् ॥

रमणीये वनोद्देशे महेन्द्रस्य गिरेस्तदा ।
हनुमानब्रवीद्दृष्टस्तदा तान्वानरर्षभान् ॥१७॥

अशोकवनिकासंस्था दृष्टा सा जनकात्मजा ।
रक्ष्यमाणा सुघोराभी राक्षसीभिरनिन्दिता ॥

एकवेणीधरा दीना रामदर्शनलालसा ।
उपवासपरिश्रान्ता जटिला मलिना कृशा ॥

ततो दृष्टेति वचनं महार्थममृतोपमम् ।
निशम्य मारुतेः सर्वे मुदिता वानराभवन् ॥

क्ष्वेलन्त्यन्ये नदन्त्यन्ये गर्जन्त्यन्ये महाबलाः ।
चक्रुः किलिकिलामन्ये प्रतिगर्जन्ति चापरे ॥

केचिदुच्छ्रितलाङ्गूलाः प्रहृष्टाः कपिकुञ्जराः ।
अञ्चितायतदीर्घाणि लाङ्गूलानि प्रविव्यधुः ॥

अपरे च हनूमन्तं वानरा वारणोपमम् ।
आप्लुत्य गिरिशृङ्गेभ्यः संस्पृशन्ति स्म हर्षिताः ॥

उक्तवाक्यं हनूमन्तमङ्गदस्तमथाब्रवीत् ।
सर्वेषां हरिवीराणां मध्ये वाचमनुत्तमाम् ॥

सत्त्वे वीर्ये न ते कश्चित्समो वानर विद्यते ।
यदवप्लुत्य विस्तीर्णं सागरं पुनरागतः ॥ ४५ ॥

अहो स्वामिनि ते भक्तिरहो वीर्यमहो धृतिः ।
दिष्ट्या दृष्टा त्वया देवी रामपत्नी यशस्विनी ॥

दिष्ट्या त्यक्ष्यति काकुत्स्थः शोकं सीतावियोगजं
ततोऽङ्गदं हनूमन्तं जाम्बवन्तं च वानराः ॥

परिवार्य प्रमुदिता भेजिरे विपुलाः शिलाः ।
श्रोतुकामाः समुद्रस्य लङ्घनं वानरोत्तमाः ॥

दर्शनं चापि लङ्कायाः सीतायाः रावणस्य च ।
तस्थुः प्राञ्जलयः सर्वे हनुमद्वदनोन्मुखाः ॥

तस्थौ तत्राङ्गदः श्रीमान्वानरैर्बहुभिर्वृतः ।
उपास्यमानो विबुधैर्दिवि देवपतिर्यथा ॥ ५० ॥

हनूमता कीर्तिमता यशस्विना
तथाङ्गदेनाङ्गदबद्धबाहुना ।
मुदा तदाध्यासितमुन्नतं मह-
न्महीधराग्रं ज्वलितं श्रियाभवत् ॥

इति सप्तपञ्चाशः सर्गः ॥

---

## अष्टपञ्चाशः सर्गः ॥

—*—

ततस्तस्य गिरेः शृङ्गे महेन्द्रस्य महाबलाः ।
हनुमत्प्रमुखाः प्रीतिं हरयो जग्मुरुत्तमाम् ॥

तं ततः प्रीतिसंहृष्टः प्रीतिमन्तं महाकपिम् ।
जाम्बवान्कार्यवृत्तान्तमपृच्छदनिलात्मजम् ॥

कथं दृष्टा त्वया देवि कथं वा तत्र वर्तते ।
तस्यां वा स कथंवृत्तः क्रूरकर्मा दशाननः ॥

तत्त्वतः सर्वमेतन्नः प्रब्रूहि त्वं महाकपे ।
श्रुतार्थाश्चिन्तयिष्यामो भूयः कार्यविनिश्चयम् ॥

यथार्थस्तत्र वक्तव्यो गतैरस्माभिरात्मवान् ।
रक्षितव्यं च यत्तत्र तद्भवान्व्याकरोतु नः ॥

स नियुक्तस्ततस्तेन संप्रहृष्टतनूरुहः ।
प्रणम्य शिरसा देव्यै सीतायै प्रत्यभाषत ॥

प्रत्यक्षमेव भवतां महेन्द्राग्रात्खमाप्लुतः ।
उदधेर्दक्षिणं पारं काङ्क्षमाणः समाहितः ॥

गच्छतश्च हि मे घोरं विघ्नरूपमिवाभवत् ।
काञ्चनं शिखरं दिव्यं पश्यामि सुमनोहरम् ॥

स्थितं पन्थानमावृत्य मेने विघ्नं च तं नगम् ।
उपसङ्गम्य तं दिव्यं काञ्चनं नगसत्तमम् ॥९॥

कृता मे मनसा बुद्धिर्भेत्तव्योऽयं मयेति च ।
प्रहतं च मया तस्य लाङ्गूलेन महागिरेः ॥

शिखरं सूर्यसंकाशं व्यशीर्यत सहस्रधा ।
व्यवसायं च तं बुद्ध्वा स होवाच महागिरिः ॥

पुत्रेति मधुरां वाणीं मनः प्रह्लादयन्निव ।
पितृव्यं चापि मां विद्धि सखायं मातरिश्वनः ॥

मैनाक इति विख्यातं निवसन्तं महोदधौ ।
पक्षवन्तः पुरा पुत्र बभूवुः पर्वतोत्तमाः ॥ १३ ॥

छन्दतः पृथिवीं चेरुर्बाधमानाः समन्ततः ।
श्रुत्वा नगानां चरितं महेन्द्रः पाकशासनः ॥

चिच्छेद भगवान्पक्षान्वज्रेणैषां सहस्रशः ।
अहं तु मोक्षितस्तस्मात्तव पित्रा महात्मना ॥

मारुतेन तदा वत्स प्रक्षिप्तोऽस्मि महार्णवे ।
रामस्य च मया साह्ये वर्तितव्यमरिंदम ॥ १६ ॥

रामो धर्मभृतां श्रेष्ठो महेन्द्रसमविक्रमः ।
एतच्छ्रुत्वा वचस्तस्य मैनाकस्य महात्मनः ॥

कार्यमावेद्य तु गिरेरुद्यतं च मनो मम ।
तेन चाहमनुज्ञातो मैनाकेन महात्मना ॥ १८ ॥

स चाप्यन्तर्हितः शैलो मानुषेण वपुष्मता ।
शरीरेण महाशैलः शैलेन च महोदधौ ॥ १९ ॥

उत्तमं जवमास्थाय शेषं पन्थानमास्थितः ।
ततोऽहं सुचिरं कालं वेगेनाभ्यगमं पथि ॥

ततः पश्याम्यहं देवीं सुरसां नागमातरम् ।
समुद्रमध्ये सा देवी वचनं मामभाषत ॥ २१ ॥

मम भक्षः प्रदिष्टस्त्वममरैर्हरिसत्तम ।
अतस्त्वां भक्षयिष्यामि विहितस्त्वं चिरस्य मे ॥

एवमुक्तः सुरसया प्राञ्जलिः प्रणतः स्थितः ।
विवर्णवदनो भूत्वा वाक्यं चेदमुदीरयम् ॥

रामो दाशरथिः श्रीमान्प्रविष्टो दण्डकावनम् ।
लक्ष्मणेन सह भ्रात्रा सीतया च परंतपः ॥

तस्य सीता हृता भार्या रावणेन दुरात्मना ।
तस्याः सकाशं दूतोऽहं गमिष्ये रामशासनात् ॥

कर्तुमर्हसि रामस्य साहाय्यं विषये सति ।
अथ वा मैथिलीं दृष्ट्वा रामं चाक्लिष्टकारिणम् ॥

आगमिष्यामि ते वक्त्रं सत्यं प्रतिशृणोमि ते ।
एवमुक्ता मया सा तु सुरसा कामरूपिणी ॥

अब्रवीन्नातिवर्तेत कश्चिदेष वरो मम ।
एवमुक्तः सुरसया दशयोजनमायतः ।' २८ ॥

ततोऽर्धगुणविस्तारो बभूवाहं क्षणेन तु ।
मत्प्रमाणाधिकं चैव व्यादितं तु मुखं तया ॥

तद्दृष्ट्वा व्यादितं चास्यं ह्रस्वं ह्यकरवं वपुः ।
तस्मिन्मुहूर्ते च पुनर्बभूवाङ्गुष्ठमात्रकः ॥ ३० ॥

अभिपत्याशु तद्वक्त्रं निर्गतोऽहं ततः क्षणात् ।
अब्रवीत्सुरसा देवी स्वेन रूपेण मां पुनः ॥

अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् ।
समानय च वैदेहीं राघवेण महात्मना ॥ ३२ ॥

सुखी भव महाबाहो प्रीतास्मि तव वानर ।
ततोऽहं साधु साध्विति सर्वभूतैः प्रशंसितः ॥

ततोऽन्तरिक्षं विपुलं प्लुतोऽहं गरुडो यथा ।
छाया मे निगृहीता च न च पश्यामि किंचन ।

सोऽहं विगतवेगस्तु दिशो दश विलोकयन् ।
न किंचित्तत्र पश्यामि येन मेऽपहृता गतिः ॥

ततो मे बुद्धिरुत्पन्ना किं नाम गगने मम ।
ईदृशो विघ्न उत्पन्नो रूपं यत्र न दृश्यते ॥ ३६ ॥

अधोभागेन मे दृष्टिः शोचता पातिता मया ।
ततोऽद्राक्षमहं भीमां राक्षसीं सलिलेशयाम् ॥

प्रहस्य च महानादमुक्तोऽहं भीमया तया ।
अवस्थितमसंभ्रान्तमिदं वाक्यमशोभनम् ॥

क्वासि गन्ता महाकाय क्षुधिताया ममेप्सितः ।
भक्षः प्रीणय मे देहं चिरमाहारवर्जितम् ॥

बाढमित्येव तां वाणीं प्रत्यगृह्णामहं ततः ।
आस्यप्रमाणादधिकं तस्याः कायमपूरयम् ॥

तस्याश्चास्यं महद्भीमं वर्धते मम भक्षणे ।
न च मां सा तु बुबुधे मम वा निकृतं कृतम् ॥

ततोऽहं विपुलं रूपं संक्षिप्य निमिषान्तरात् ।
तस्या हृदयमादाय प्रपतामि नभःस्थलम् ॥

सा विसृष्टभुजा भीमा पपात लवणाम्भसि ।
मया पर्वतसंकाशा निकृत्तहृदया सती ॥ ४१ ॥

शृणोमि खगतानां च सिद्धानां चारणैः सह ।
राक्षसी सिंहिका भीमा क्षिप्रं हनुमता हता ॥

तां हत्वा पुनरेवाहं कृत्यमात्ययिकं स्मरन् ।
गत्वा चाहं महाध्वानं पश्यामि नगमण्डितम् ॥

दक्षिणं तीरमुदधेर्लङ्का यत्र च सा पुरी ।
अस्तं दिनकरे याते रक्षसां निलयं पुरम् ॥

प्रविष्टोऽहमविज्ञातो रक्षोभिर्भीमविक्रमैः ।
तत्र प्रविशतश्चापि कल्पान्तघनसंनिभा ॥४७॥

अट्टहासं विमुञ्चन्ती नारी काप्युत्थिता पुरः ।
जिघांसन्तीं ततस्तां तु ज्वलदग्निशिरोरुहाम् ॥

सव्यमुष्टिप्रहारेण पराजित्य सुभैरवाम् ।
प्रदोषकाले प्रविशन्भीतयाहं तयोदितः ॥४९॥

अहं लङ्कापुरी वीर निर्जिता विक्रमेण ते ।
यस्मात्तस्माद्विजेतासि सर्वरक्षांस्यशेषतः ॥

तत्राहं सर्वरात्रं तु विचिन्वञ्जनकात्मजाम् ।
रावणान्तःपुरगतो न चापश्यं सुमध्यमाम् ॥

ततः सीतामपश्यंस्तु रावणस्य निवेशने ।
शोकसागरमासाद्य न पारमुपलक्षये ॥ ५२ ॥

शोभता च मया दृष्टं प्राकारेण समावृतम् ।
काञ्चनेन विकृष्टेन गृहोपवनमुत्तमम् ॥ ५३ ॥

तं प्राकारमवप्लुत्य पश्यामि बहुपादपम् ।
अशोकवनिकामध्ये शिंशुपापादपो महान् ॥

तमारुह्य च पश्यामि काञ्चनं कदलीवनम् ।
अदूरे शिंशुपावृक्षात्पश्यामि वरवर्णिनीम् ॥

श्यामां कमलपत्राक्षीमुपवासकृशाननाम् ।
तदेकवाससंवीतां रजोध्वस्तशिरोरुहाम् ॥

शोकसंतापदीनाङ्गीं सीतां भर्तृहिते स्थिताम् ।
राक्षसीभिर्विरूपाभिः क्रूराभिरभिसंवृताम् ।

मांसशोणितभक्ष्याभिर्व्याघ्रीभिर्हरिणीमिव ॥
सा मया राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥

एकवेणीधरा दीना भर्तृचिन्तापरायणा ।
भूमिशय्या विवर्णाङ्गी पद्मिनीव हिमागमे ॥

रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया ।
कथंचिन्मृगशावाक्षी तूर्णमासादिता मया ॥

तां दृष्ट्वा तादृशीं नारीं रामपत्नीं यशस्विनीम् ।
तत्रैव शिंशुपावृक्षे पश्यन्नहमवस्थितः ॥ ६१ ॥

ततो हलहलाशब्दं काञ्चीनूपुरमिश्रितम् ।
शृणोम्यधिकगम्भीरं रावणस्य निवेशने ।

ततोऽहं परमोद्विग्नः स्वं रूपं प्रतिसंहरन् ।
अहं तु शिंशुपावृक्षे पक्षीव गहने स्थितः ॥

ततो रावणदाराश्च रावणश्च महाबलः ।
तं देशं समनुप्राप्ता यत्र सीताभवत्स्थिता ॥

तद्दृष्ट्वाथ वरारोहा सीता रक्षोमहाबलम् ।
संकुच्योरू स्तनौ पीनौ बाहुभ्यां परिरभ्य च ॥

वित्रस्तां परमोद्विग्नां वीक्षमाणां ततस्ततः ।
त्राण किंचिदपश्यन्तीं वेपमानां तपस्विनीम् ॥

तामुवाच दशग्रीवः सीतां परमदुःखिताम् ।
अवाक्शिराः प्रपतितो बहु मन्यस्व मामिति ॥

यदि चेत्त्वं तु दर्पान्मां नाभिनन्दसि गर्विते ।
द्वौ मासावन्तरं सीते पास्यामि रुधिरं तव ॥

एतच्छ्रुत्वा वचस्तस्य रावणस्य दुरात्मनः ।
उवाच परमक्रुद्धा सीता वचनमुत्तमम् ॥ ६९॥

राक्षसाधम रामस्य भार्याममिततेजसः ।
इक्ष्वाकुकुलनाथस्य स्नुषां दशरथस्य च ॥

अवाच्यं वदतो जिह्वा कथं न पतिता तव ।
किंचिद्वीर्यं तवानार्य यो मां भर्तुरसंनिधौ ॥

अपहृत्यागतः पाप तेनादृष्टो महात्मना ।
न त्वं रामस्य सदृशो दास्येऽप्यस्य न युज्यसे ॥

यज्ञीयः सत्यवादी च रणश्लाघी च राघवः ।
जानक्या परुषं वाक्यमेवमुक्तो दशाननः ॥

जज्वाल सहसा कोपाच्चितास्थ इव पावकः ।
विवृत्य नयने क्रूरे मुष्टिमुद्यम्य दक्षिणम् ॥

मैथिलीं हन्तुमारब्धः स्त्रीभिर्हाहाकृतं तदा ।
स्त्रीणां मध्यात्समुत्पत्य तस्य भार्या दुरात्मनः ।

वरा मण्डोदरी नाम तया स प्रतिषेधितः ।
उक्तश्च मधुरां वाणीं तया स मदनार्दितः ॥

सीतया तव किं कार्यं महेन्द्रसमविक्रम ।
देवगन्धर्वकन्याभिर्यक्षकन्याभिरेव च ॥ ७७ ।

सार्धं प्रभो रमस्वेह सीतया किं करिष्यसि ।
ततस्ताभिः समेताभिर्नारीभिः स महाबलः ॥

प्रसाद्य सहसा नीतो भवनं स्वं निशाचरः ।
याते तस्मिन्दशग्रीवे राक्षस्यो विकृताननाः ॥

सीतां निर्भर्त्सयामासुर्वाक्यैः क्रूरैः सुदारुणैः ।
तृणवद्भाषितं तासां गणयामास जानकी ॥

तर्जितं च तदा तासां सीतां प्राप्य निरर्थकम् ।
वृथा गर्जितनिश्चेष्टा राक्षस्यः पिशिताशनाः ॥

रावणाय शशंसुस्ताः सीताध्यवसितं महत् ।
ततस्ताः सहिताः सर्वा विहताशा निरुद्यमाः ॥

परिक्षिप्य समन्तात्तां निद्रावशमुपागताः ।
तासु चैव प्रसुप्तासु सीता भर्तृहिते रता ॥

विलप्य करुणं दीना प्रशुशोच सुदुःखिता ।
तासां मध्यात्समुत्थाय त्रिजटा वाक्यमब्रवीत् ॥

आत्मानं खादत क्षिप्रं न सीता विनशिष्यति ।
जनकस्यात्मजा साध्वी स्नुषा दशरथस्य च ॥

स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः ।
रक्षसां च विनाशाय भर्तुरस्या जयाय च ॥

अलमस्मात्परित्रातुं राघवाद्राक्षसीगणम् ।
अभियाचाम वैदेहीमेतद्धि मम रोचते ॥८७॥

तस्या ह्येवंविधः स्वप्नो दुःखितायाः प्रदृश्यते ।
सा दुःखैर्विविधैर्मुक्ता सुखमाप्नोत्यनुत्तमम् ॥

प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ।
ततः सा ह्रीमती बाला भर्तुर्विजयहर्षिता ॥

अवोचद्यदि तत्तथ्यं भवेयं शरण हि वः ।
तां चाहं तादृशीं दृष्ट्वा सीताया दारुणां दशाम् ॥

चिन्तयामास विक्रान्तो न च मे निर्वृतं मनः ।
संभाषणार्थे च मया जानक्याश्चिन्तितो विधिः ॥

इक्ष्वाकूणां हि वंशस्तु ततो मम पुरस्कृतः ।
श्रुत्वा तु गदितां वाचं राजर्षिगणपूजिताम् ॥

प्रत्यभाषत मां देवी बाष्पैः पिहितलोचना ।
कस्त्वं केन कथं चेह प्राप्तो वानरपुंगव ॥९३॥

का च रामेण ते प्रीतिस्तन्मे शंसितुमर्हसि ।
तस्यास्तद्वचनं श्रुत्वा अहमप्यब्रुवं वचः ॥९४॥

देवि रामस्य भर्तुस्ते सहायो भीमविक्रमः ।
सुग्रीवो नाम विक्रान्तो वानरेन्द्रो महाबलः ॥

तस्य मां विद्धि भृत्यं त्वं हनुमन्तमिहागतम् ।
भर्त्राहं प्रेषितस्तुभ्यं रामेणाक्लिष्टकर्मणा ॥

इदं च पुरुषव्याघ्रः श्रीमान्दाशरथिः स्वयम् ।
अङ्गुलीयमभिज्ञानमदात्तुभ्यं यशस्विनि ॥९७॥

तदिच्छामि त्वयाज्ञप्तं देवि किं करवाण्यहम् ।
रामलक्ष्मणयोः पार्श्वं नयामि त्वां किमुत्तरम् ॥

एतच्छ्रुत्वा विदित्वा च सीता जनकनन्दिनी ।
आह रावणमुत्साद्य राघवो मां नयत्विति ॥

प्रणम्य शिरसा देवीमहमार्यामनिन्दिताम् ।
राघवस्य मनोह्लादमभिज्ञानमयाचिषम् ॥

अथ मामब्रवीत्सीता गृह्यतामयमुत्तमः ।
मणिर्येन महाबाहू रामस्त्वां बहु मन्यते ॥

इत्युक्त्वा तु वरारोहा मणिप्रवरमद्भुतम् ।
प्रायच्छत्परमोद्विग्ना वाचा मां संदिदेश ह ॥

ततस्तस्यै प्रणम्याहं राजपुत्र्यै समाहितः ।
प्रदक्षिणं परिक्रामन्निहाभ्युद्गतमानसः ॥१०३॥

उक्तोऽहं पुनरेवेदं निश्चित्य मनसा तया ।
हनुमन्मम वृत्तान्तं वक्तुमर्हसि राघवे ॥१०४॥

यथा श्रुत्वैव न चिरात्तावुभौ रामलक्ष्मणौ ।
सुग्रीवसहितौ वीरावुपेयातां तथा कुरु ॥

यद्यन्यथा भवेदेतद्द्वौ मासौ जीवितं मम ।
न मां द्रक्ष्यति काकुत्स्थो म्रिये साहमनाथवत् ॥

तच्छ्रुत्वा करुणं वाक्यं क्रोधो मामभ्यवर्तत ।
उत्तरं च मया दृष्टं कार्यशेषमनन्तरम् ॥

ततोऽवर्धत मे कायस्तदा पर्वतसंनिभः ।
युद्धकाङ्क्षी वनं तस्य विनाशयितुमारभे ॥

तद्रूपं वनषण्डं तु भ्रान्तत्रस्तमृगद्विजम् ।
प्रतिबुद्धा निरीक्षन्ते राक्षस्यो विकृताननाः ॥

मां च दृष्ट्वा वने तस्मिन्समागम्य ततस्ततः ।
ताः समभ्यागताः क्षिप्रं रावणायाचचक्षिरे ॥

राजन्वनमिदं दुर्गं तव भग्नं दुरात्मना ।
वानरेण ह्यविज्ञाय तव वीर्यं महाबल ॥ १११ ॥

दुर्बुद्धेस्तस्य राजेन्द्र तव विप्रियकारिणः ।
वधमाज्ञापय क्षिप्रं यथासौ विलयं व्रजेत् ॥

तच्छ्रुत्वा राक्षसेन्द्रेण विसृष्टा भृशदुर्जयाः ।
राक्षसाः किंकरा नाम रावणस्य मनोनुगाः ॥

तेषामशीतिसाहस्रं शूलमुद्गरपाणिनाम् ।
मया तस्मिन्वनोद्देशे परिघेण निषूदितम् ॥

तेषां तु हतशेषा ये ते गत्वा लघुविक्रमाः ।
निहतं च महत्सैन्यं रावणायाचचक्षिरे ॥

ततो मे बुद्धिरुत्पन्ना चैत्यप्रासादमाक्रमम् ।
तत्रस्थान्राक्षसान्हत्वा शतं स्तम्भेन वै पुनः ॥

उच्छ्रायभूतो लङ्कायाः स च विध्वंसितो मया ।
ततः प्रहस्तस्य सुतं जम्बुमालिनमादिशत् ॥

राक्षसैर्बहुभिः सार्धं घोररूपैर्भयानकैः ।
तमहं बलसम्पन्नं राक्षसं रणकोविदम् ॥११८॥

परिघेणातिघोरेण सूदयामि सहानुगम् ।
तच्छ्रुत्वा राक्षसेन्द्रस्तु मन्त्रिपुत्रान्महाबलान् ॥

पदातिबलसम्पन्नान्प्रेषयामास रावणः ।
परिघेणैव तान्सर्वान्नयामि यमसादनम् ॥

मन्त्रिपुत्रान्हताञ्छ्रुत्वा समरे लघुविक्रमान् ।
पञ्च सेनाग्रगाञ्छूरान्प्रेषयामास रावणः ॥

तानहं सहसैन्यान्वै सर्वानेवाभ्यसूदयम् ।
ततः पुनर्दशग्रीवः पुत्रमक्षं महाबलम् ॥१२२॥

बहुभी राक्षसैः सार्धं प्रेषयामास रावणः ।
तं तु मन्दोदरीपुत्रं कुमारं रणपण्डितम् ॥

सहसा खं समुत्क्रान्तं पादयोश्च गृहीतवान् ।
चर्मासिनं शतगुणं भ्रामयित्वा व्यपेषयम् ॥

तमक्षमाहवं मत्वा निशम्य स दशाननः ।
तत इन्द्रजितं नाम द्वितीयं रावणः सुतम् ॥

व्यादिदेश सुसंक्रुद्धो बलिनं युद्धदुर्मदम् ।
तच्चाप्यहं बलं सर्वं तं च राक्षसपुंगवम् ॥

नष्टौजसं रणे कृत्वा परं हर्षमुपागमम् ।
महता हि महाबाहुः प्रत्ययेन महाबलः ॥

प्रेषितो रावणेनैव सह वीरैर्मदोत्कटैः ।
सोऽविषह्यं हि मां बुद्ध्वा स्वसैन्यं चावमर्दितम् ॥

ब्राह्मेणास्त्रेण स तु मां बबन्धाचातिवेगितः ।
रज्जुभिश्चाभिबध्नन्ति ततो मां तत्र राक्षसाः ॥

रावणस्य समीपं च गृहीत्वा मामुपानयन् ।
दृष्ट्वा संभाषितश्चाहं रावणेन दुरात्मना ॥

पृष्टश्च लङ्कागमनं राक्षसानां च तं वधम् ।
तत्सर्वं च मया तत्र सीतार्थमिति जल्पितम् ॥

अस्याहं दर्शनाकाङ्क्षी प्राप्तस्त्वद्भवनं विभो ।
मारुतस्यौरसः पुत्रो वानरो हनुमानहम् ॥

रामदूतं च मां विद्धि सुग्रीवसचिवं कपिम् ।
सोऽहं दूत्येन रामस्य त्वत्सकाशमिहागतः ॥

सुग्रीवश्च महातेजाः स त्वां कुशलमब्रवीत् ।
धर्मार्थकामसहितं हितं पथ्यमुवाच च ॥१३४॥

वसतो ऋश्यमूके मे पर्वते विपुलद्रुमे ।
राघवो रणविक्रान्तो मित्रत्वं समुपागतः ॥

तेन मे कथितं राजा भार्या मे रक्षसा हृता ।
तत्र साहाय्यमस्माकं कार्यं सर्वात्मना त्वया ॥

मया च कथितं तस्मै वालिनश्च वधं प्रति ।
तत्र साहाय्यहेतोर्मे समयं कर्तुमर्हसि ॥१३७॥

वालिना हृतराज्येन सुग्रीवेण सह प्रभुः ।
चक्रेऽग्निसाक्षिकं सख्यं राघवः सहलक्ष्मणः ॥

तेन वालिनमुत्पाट्य शरेणैकेन संयुगे ।
वानराणां महाराजः कृतः स प्लवतां प्रभुः ॥

तस्य साहाय्यमस्माभिः कार्यं सर्वात्मना त्विह ।
तेन प्रस्थापितस्तुभ्यं समीपमिह धर्मतः ॥

क्षिप्रमानीयतां सीता दीयतां राघवाय च ।
यावन्न हरयो वीरा विधमन्ति बलं तव ॥

वानराणां प्रभावो हि न केन विदितः पुरा ।
देवतानां सकाशं च ये गच्छन्ति निमन्त्रिताः ॥

इति वानरराजस्त्वामाहेत्यभिहितो मया ।
मामैक्षत ततः क्रुद्धश्चक्षुषा प्रदहन्निव ॥ १४३ ॥

तेन वध्योऽहमाज्ञप्तो रक्षसा रौद्रकर्मणा ।
मत्प्रभावमविज्ञाय रावणेन दुरात्मना ॥१४४॥

ततो विभीषणो नाम तस्य भ्राता महामतिः ।
तेन राक्षसराजोऽसौ याचितो मम कारणात् ॥

नैवं राक्षसशार्दूल त्यज्यतामेष निश्चयः ।
राजशास्त्रव्यपेतो हि मार्गः संसेव्यते त्वया ॥

दूतवध्या न दृष्टा हि राजशास्त्रेषु राक्षस ।
दूतेन वेदितव्यं च यथार्थं हितवादिना ॥

सुमहत्यपराधेऽपि दूतस्यातुलविक्रम ।
विरूपकरणं दृष्टं न वधोऽस्तीह शास्त्रतः ॥

विभीषणेनैवमुक्तो रावणः संदिदेश तान् ।
राक्षसानेतदेवास्य लाङ्गूलं दह्यतामिति ॥१४९॥

ततस्तस्य वचः श्रुत्वा मम पुच्छं समन्ततः ।
वेष्टितं शणवल्कैश्च जीर्णैः कार्पासजैः पटैः ॥

राक्षसाः सिद्धसंनाहास्ततस्ते चण्डविक्रमाः ।
तदादहन्त मे पुच्छं निघ्नन्तः काष्ठमुष्टिभिः ॥

बद्धस्य बहुभिः पाशैर्यन्त्रितस्य च राक्षसैः ।
ततस्ते राक्षसाः शूरा बद्धं मामग्निसंवृतम् ॥

अघोषयन्राजमार्गे नगरद्वारमागताः ।
ततोऽहं सुमहद्रूपं संक्षिप्य पुनरात्मनः ॥१५३॥

विमोचयित्वा तं बन्धं प्रकृतिस्थः स्थितः पुनः ।
आयसं परिघं गृह्य तानि रक्षांस्यसूदयम् ॥

ततस्तन्नगरद्वारं वेगेनाप्लुतवानहम् ।
पुच्छेन च प्रदीप्तेन तां पुरीं साट्टगोपुराम् ॥

दहाम्यहमसंभ्रान्तो युगान्ताग्निरिव प्रजाः ।
ततो मे ह्यभवत्त्रासो लङ्कां दग्ध्वा समीक्ष्य तु ॥

विनष्टा जानकी व्यक्तं न ह्यदग्धः प्रदृश्यते ।
लङ्कायां कश्चिदुद्देशः सर्वा भस्मीकृता पुरी ॥

दहता च मया लङ्कां दग्धा सीता न संशयः ।
रामस्य हि महत्कार्यं मयेदं वितथीकृतम् ।

इति शोकसमाविष्टश्चिन्तामहमुपागतः ।
अथाहं वाचमश्रौषं चारणानां शुभाक्षराम् ॥

जानकी न च दग्धेति विस्मयोदन्तभाषिणाम् ।
ततो मे बुद्धिरुत्पन्ना श्रुत्वा तामद्भुतां गिरम् ॥

अदग्धा जानकीत्येवं निमित्तैश्चोपलक्षिता ।
दीप्यमाने तु लाङ्गूले न मां दहति पावकः ॥

हृदयं च प्रहृष्टं मे वाताः सुरभिगन्धिनः ।
तैर्निमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः ॥

ऋषिवाक्यैश्च सिद्धार्थैरभवं हृष्टमानसः ।
पुनर्दृष्ट्वा च वैदेहीं विसृष्टश्च तया पुनः ॥

ततः पर्वतमासाद्य तत्रारिष्टमहं पुनः ।
प्रतिप्लवनमारेभे युष्मद्दर्शनकाङ्क्षया ॥ १६४ ॥

ततः पेवनपन्नगार्कसिद्धगन्धर्वसेवितम् ।
पन्थानमहमाक्रम्य भवतो दृष्टवानिह ॥१६९॥

राघवस्य प्रभावेण भवतां चैव तेजसा ।
सुग्रीवस्य च कार्यार्थं मया सर्वमनुष्ठितम्

एतत्सर्वं मया तत्र यथावदुपपादितम् ।
अत्र यन्न कृतं शेषं तत्सर्वं क्रियतामिति ।

इति अष्टपञ्चाशः सर्गः ॥

एकोनषष्टितमः सर्गः ॥

एतदाख्याय तत्सर्वं हनुमान्मारुतात्मजः ।
भूयः समुपचक्राम वचनं वक्तुमुत्तरम् ॥ १ ॥

सफलो राघवोद्योगः सुग्रीवस्य च संभ्रमः ।
शीलमासाद्य सीताया मम च प्रवणं मनः ॥

तपसा धारयेल्लोकान्क्रुद्धो वा निर्दहेदपि ।
सर्वथातिप्रवृद्धोऽसौ रावणो राक्षसाधिपः ॥

तस्य तां स्पृशतो गात्रं तपसा न विनाशितम् ।
न त्वदग्निस्त्वां कुर्यात्संस्पृष्टा पाणिना सती ॥

जनकस्यात्मजा कुर्याद्यत्क्रोधकलुषीकृता ।
जाम्बवत्प्रमुखान्सर्वाननुज्ञाप्य महाहरीन् ॥५॥

अस्मिन्नेवंगते कार्ये भवतां च निवेदिते ।
न्याय्यं स्म सह वैदेह्या द्रष्टुं तौ पार्थिवात्मजौ ॥

अहमेकोऽपि पर्याप्तः सराक्षसगणां पुरीम् ।
तां लङ्कां तरसा हन्तुं रावणं च महाबलम् ॥

किं पुनः सहितो वीरैर्बलवद्भिः कृतात्मभिः ।
कृतास्त्रैः प्लवगैः शूरैर्भवद्भिर्विजयैषिभिः ॥ ८ ॥

अहं तु रावणं युद्धे ससैन्यं सपुरःसरम् ।
सहपुत्रं वधिष्यामि सहोदरयुतं युधि ॥ ९ ॥

ब्राह्ममैन्द्रं च रौद्रं च वायव्यं वारुणं तथा ।
यदि शक्रजितोऽस्त्राणि दुर्निरीक्षाणि संयुगे ॥

तान्यहं विधमिष्यामि निहनिष्यामि राक्षसान् ।
भवतामभ्यनुज्ञातो विक्रमो मे रुणद्धि तम् ॥

ममातुला विसृष्टा हि शैलवृष्टिर्निरन्तरा ।
देवानपि रणे हन्यात्किं पुनस्तान्निशाचरान् ॥

सागरोऽप्यतियाद्वेलां मन्दरः प्रचलेदपि ।
न जाम्बवन्तं समरे कम्पयेदरिवाहिनी ॥१३॥

सर्वराक्षससंघानां राक्षसा ये च पूर्वकाः ।
अलमेको विनाशाय वीरो वालिसुतः कपिः ॥

पनसस्योरुवेगेन नीलस्य च महात्मनः ।
मन्दरोऽपि विशीर्येत किं पुनर्युधि राक्षसाः ॥

सदेवासुरयक्षेषु गन्धर्वोरगपक्षिषु ।
मैन्दस्य प्रतियोद्धारं शंसत द्विविदस्य वा ॥

अश्विपुत्रौ महाभागावेतौ प्लवगसत्तमौ ।
एतयोः प्रतियोद्धारं न पश्यामि रणाजिरे ॥

पितामहवरोत्सेकात्परमं दर्पमास्थितौ ।
अमृतप्राशिनावेतौ सर्ववानरसत्तमौ ॥ १८ ॥

अश्विनोर्माननार्थं हि सर्वलोकपितामहः ।
सर्वावध्यत्वमतुलमनयोर्दत्तवान्पुरा ॥ १९ ॥

वरोत्सेकेन मत्तौ च प्रमथ्य महतीं चमूम् ।
सुराणामयुतं वीरौ पीतवन्तौ प्लवंगमौ ॥२०॥

एतावेव हि संक्रुद्धौ सवाजिरथकुञ्जराम् ।
लङ्कां नाशयितुं शक्तौ सर्वे तिष्ठन्तु वानराः ।

मयैव निहता लङ्का दग्धा भस्मीकृता पुनः ।
राजमार्गेषु सर्वत्र नाम विश्रावितं मया ॥२२॥

जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥

अहं कोसलराजस्य दासः पवनसंभवः ।
हनुमानिति सर्वत्र नाम विश्रावितं मया । २४॥

अशोकवनिकामध्ये रावणस्य दुरात्मनः ।
अधस्ताच्छिंशुपावृक्षे साध्वी करुणमास्थिता ॥

राक्षसीभिः परिवृता शोकसंतापकर्शिता ।
मेघलेखापरिवृता चन्द्रलेखेव निष्प्रभा ॥२६॥

अचिन्तयन्ती वैदेही रावणं बलदर्पितम् ।
पतिव्रता च सुश्रोणी अवष्टब्धा च जानकी ॥

अनुरक्ता हि वैदेही रामं सर्वात्मना शुभा ।
अनन्यचित्ता रामे च पौलोमीव पुरंदरे ॥२८॥

तदेकवासःसंवीता रजोध्वस्ता तथैव च ।
शोकसंतापदीनाङ्गी सीता भर्तृहिते रता ॥२९॥

सा मया राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ।
राक्षसीभिर्विरूपाभिर्दृष्टा हि प्रमदावने ॥३०॥

एकवेणीधरा दीना भर्तृचिन्तापरायणा ।
अधःशय्या विवर्णाङ्गी पद्मिनीव हिमागमे ॥

रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया ।
कथंचिन्मृगशावाक्षी विश्वासमुपपादिता ॥३२॥

ततः संभाषिता चैव सर्वमर्थं च दर्शिता ।
रामसुग्रीवसख्यं च श्रुत्वा प्रीतिमुपागता ।

नियतः समुदाचारो भक्तिर्भर्तरि चोत्तमा ।
यन्न हन्ति दशग्रीवं स महात्मा कृतागसम् ॥

निमित्तमात्रं रामस्तु वधे तस्य भविष्यति ।
सा प्रकृत्यैव तन्वङ्गी तद्वियोगाच्च कर्शिता ॥

प्रतिपत्पाठशीलस्य विद्येव तनुतां गता
एवमास्ते महाभागा सीता शोकपरायणा ।
यदत्र प्रतिकर्तव्यं तत्सर्वमुपपाद्यताम् ॥ ३६ ॥

इति एकोनषष्टितमः सर्गः ॥

## षष्टितमः सर्गः ॥

तस्य तद्वचनं श्रुत्वा वालिसूनुरभाषत ।
अयुक्तं तु विना देवीं दृष्टवद्भिश्च वानराः ॥

समीपं गन्तुमस्माभी राघवस्य महात्मनः ।
दृष्टा देवी न चानीता इति तत्र निवेदनम् ॥

अयुक्तमिव पश्यामि भवद्भिः ख्यातविक्रमैः ।
न हि नः प्लवने कश्चिन्नापि कश्चित्पराक्रमे ॥

तुल्यः सामरदैत्येषु लोकेषु हरिसत्तमाः ।
तेष्वेवं हतवीरेषु राक्षसेषु हनूमता ॥ ४ ॥

किमन्यदत्र कर्तव्यं गृहीत्वा याम जानकीम् ।
तमेवं कृतसंकल्पं जाम्बवान्हरिसत्तमः ।
उवाच परमप्रीतो वाक्यमर्थवदर्थवित् ॥ ५ ॥

न वानरेषा मतिरक्षमा नो
यथा भवान्पश्यति राजपुत्र ।
यथा तु रामस्य मतिर्निविष्टा
तथा भवान्पश्यतु कार्यसिद्धिम् ॥ ६ ॥

इति षष्टितमः सर्गः ॥



एकषष्टितमः सर्गः ॥



ततो जाम्बवतो वाक्यमगृह्णन्त वनौकसः ।
अङ्गदप्रमुखा वीरा हनूमांश्च महाकपिः ॥ १ ॥

प्रीतिमन्तस्ततः सर्वे वायुपुत्रपुरःसराः ।
महेन्द्राग्रं परित्यज्य पुप्लुवुः प्लवगर्षभाः ॥ २ ॥

मेरुमन्दरसङ्काशा मत्ता इव महागजाः ।
छादयन्त इवाकाशं महाकाया महाबलाः ॥३॥

सभाज्यमानं भूतैस्तमात्मवन्तं महाबलम् ।
हनुमन्तं महावेगं वहन्त इव दृष्टिभिः ॥ ४ ॥

राघवे चार्थनिर्वृत्तिं कर्तुं च परमं यशः।
समाधाय समृद्धार्थाः कर्मसिद्धिभिरुन्नताः॥

प्रियाख्यानोन्मुखाः सर्वे सर्वे युद्धाभिनन्दिनः।
सर्वे रामप्रतीकारे निश्चितार्था मनस्विनः॥

प्लवमानाः समुत्पत्य ततस्ते काननौकसः।
नन्दनोपममासेदुर्वनं द्रुमलतायुतम् ॥ ७ ॥

यत्तन्मधुवनं नाम सुग्रीवस्याभिरक्षितम्।
अधृष्यं सर्वभूतानां सर्वभूतमनोहरम् ॥ ८ ॥

यद्रक्षति महावीर्यः सदा दधिमुखः कपिः।
मातुलः कपिमुख्यस्य सुग्रीवस्य महात्मनः॥

ते तद्वनमुपागम्य बभूवुः परमोत्कटाः।
वानरा वानरेन्द्रस्य मनःकान्ततमं महत् ॥१०॥

ततस्ते वानरा हृष्टा दृष्ट्वा मधुवनं महत्।
कुमारमभ्ययाचन्त मधूनि मधुपिङ्गलाः ॥११॥

ततः कुमारस्तान्वृद्धाञ्जाम्बवत्प्रमुखान्कपीन्।
अनुमान्य ददौ तेषां निसर्गं मधुभक्षणे ॥१२॥

ततश्चानुगताः सर्वे संप्रहृष्टा वनौकसः ।
मुदिताः प्रेरिताश्चापि प्रनृत्यन्ति ततस्ततः ॥

गायन्ति केचित्प्रणमन्ति केचि-
न्नृत्यन्ति केचित्प्रहसन्ति केचित् ।
पतन्ति केचिद्विचरन्ति केचि-
त्प्लवन्ति केचित्प्रलपन्ति केचित् ॥१४॥

परस्परं केचिदुपाश्रयन्ते
परस्परं केचिदुपाक्रमन्ते ।
परस्परं केचिदुपब्रुवन्ते
परस्परं केचिदुपारमन्ते ॥ १५ ॥

द्रुमाद्द्रुमं केचिदभिद्रवन्ते
क्षितौ नगाग्रान्निपतन्ति केचित् ।
महीतलात्केचिदुदीर्णवेगा
महाद्रुमाग्राण्यभिसंपतन्ति ॥ १६ ॥

गायन्तमन्यः प्रहसन्नुपैति
हसन्तमन्यः प्ररुदन्नुपैति ।

रुदन्तमन्यः प्रणदन्नुपैति
नदन्तमन्यः प्रणुदन्नुपैति ॥ १७ ॥

समाकुलं तत्कपिसैन्यमासी-
न्मधुप्रपानोत्कटसत्त्वचेष्टम् ।
न चात्र कश्चिन्न बभूव मत्तो
न चात्र कश्चिन्न बभूव तृप्तः ॥ १८ ॥

ततो वनं तैः परिभक्ष्यमाणं
द्रुमांश्च विध्वंसितपत्रपुष्पान् ।
समीक्ष्य कोपाद्दधिवक्त्रनामा
निवारयामास कपिः कपींस्तान् ॥१९॥

स तैः प्रवृद्धैः परिभर्त्स्यमानो
वनस्य गोप्ता हरिवीरवृद्धः ।
चकार भूयो मतिमुग्रतेजा
वनस्य रक्षां प्रति वानरेभ्यः ॥ २० ॥

उवाच कांश्चित्परुषाणि धृष्ट-
मसक्तमन्यांश्च तलैर्जघान ।

समेत्य कैश्चित्कलहं चकार
तथैव साम्नोपजगाम कांश्चित् ॥ २१ ॥

स तैर्मदात्संपरिवार्य वाक्यै-
र्बलाच्च तेन प्रतिवार्यमाणैः ।
प्रधर्षितस्त्यक्तभयैः समेत्य
प्रकृष्यते चाप्यनवेक्ष्य दोषम् ॥ २२ ॥

नखैस्तुदन्तो दशनैर्दशन्त-
स्तलैश्च पादैश्च समापयन्तः ।
मदात्कपिं तं कपयः समग्रा
महावनं निर्विषयं च चक्रुः ॥ २३ ॥

इति एकषष्टितमः सर्गः ॥

---

## द्विषष्टितमः सर्गः ॥

---

तानुवाच हरिश्रेष्ठो हनुमान्वानरर्षभः ।
अव्यग्रमनसो यूयं मधु सेवत वानराः ॥ १ ॥

अहमावारयिष्यामि युष्माकं परिपन्थिनः ।
श्रुत्वा हनुमतो वाक्यं हरीणां प्रवरोऽङ्गदः ॥

प्रत्युवाच प्रसन्नात्मा पिबन्तु हरयो मधु ।
अवश्यं कृतकार्यस्य वाक्यं हनुमतो मया ॥ ३ ॥

अकार्यमपि कर्तव्यं किमङ्ग पुनरीदृशम् ।
अङ्गदस्य मुखाच्छ्रुत्वा वचनं वानरर्षभाः ॥

साधु साध्विति संहृष्टा वानराः प्रत्यपूजयन् ।
पूजयित्वाङ्गदं सर्वे वानरा वानरर्षभम् ॥ ५ ॥

जग्मुर्मधुवनं यत्र नदीवेगा इव द्रुतम् ।
ते प्रविष्टा मधुवनं पालानाक्रम्य वीर्यतः ॥ ६ ॥

अतिसर्गाच्च पटवो दृष्ट्वा श्रुत्वा च मैथिलीम् ।
पपुः सर्वे मधु तदा रसवत्फलमाददुः ॥ ७ ॥

उत्पत्य च ततः सर्वे वनपालान्समागतान् ।
ताडयन्ति स्म शतशः सक्तान्मधुवने तदा ॥ ८ ॥

मधूनि द्रोणमात्राणि बाहुभिः परिगृह्य ते ।
पिबन्ति सहिताः सर्वे निघ्नन्ति स्म तथापरे ॥

केचित्पीत्वापविध्यन्ति मधूनि मधुपिङ्गलाः ।
मधूच्छिष्टेन केचिच्च जघ्नुरन्योन्यमुत्कटाः ॥

अपरे वृक्षमूले तु शाखां गृह्य व्यवस्थिताः ।
अत्यर्थं च मदग्लानाः पर्णान्यास्तीर्य शेरते ॥

उन्मत्तभूताः प्लवगा मधुमत्ताश्च हृष्टवत् ।
क्षिपन्ति च तदान्योन्यं स्खलन्ति च तथापरे ॥

केचित्क्ष्वेलां प्रकुर्वन्ति केचित्कूजन्ति हृष्टवत् ।
हरयो मधुना मत्ताः केचित्सुप्ता महीतले ॥

कृत्वा किंचिद्धसन्त्यन्ये केचित्कुर्वन्ति चेतरत् ।
कृत्वा किंचिद्वदन्त्यन्ये केचिद्बुध्यन्ति चेतरत् ॥

येऽप्यत्र मधुपालाः स्युः प्रेष्या दधिमुखस्य तु ।
तेऽपि तैर्वानरैर्भीमैः प्रतिषिद्धा दिशो गताः ॥

जानुभिस्तु प्रकृष्टाश्च देवमार्गं च दर्शिताः ।
अब्रुवन्परमोद्विग्ना गत्वा दधिमुखं वचः ।

हनूमता दत्तवरैर्हतं मधुवनं बलात् ।
वयं च जानुभिः कृष्टा देवमार्गं च दर्शिताः ॥

ततो दधिमुखः क्रुद्धो वनपस्तत्र वानरः ।
हतं मधुवनं श्रुत्वा सान्त्वयामास तान्हरीन् ॥

इहागच्छत गच्छामो वानरान्बलदर्पितान् ।
बलेन वारयिष्यामो मधु भक्षयतो वयम् ॥

श्रुत्वा दधिमुखस्येदं वचनं वानरर्षभाः ।
पुनर्वीरा मधुवनं तेनैव सहिता ययुः । २० ॥

मध्ये चैषां दधिमुखः प्रगृह्य तरसा तरुम् ।
समभ्यधावद्वेगेन ते च सर्वे प्लवंगमाः ॥ २१ ॥

ते शिलाः पादपांश्चापि पर्वतांश्चापि वानराः ।
गृहीत्वाऽभ्यगमन्क्रुद्धा यत्र ते कपिकुञ्जराः ॥

ते स्वामिवचनं वीरा हृदयेष्ववसज्य तत् ।
त्वरया ह्यभ्यधावन्त सालतालशिलायुधाः ॥

वृक्षस्थांश्च तलस्थांश्च वानरान्बलदर्पितान् ।
अभ्यक्रामंस्ततो वीराः पालास्तत्र सहस्रशः ॥

अथ दृष्ट्वा दधिमुखं क्रुद्धं वानरपुंगवाः ।
अभ्यधावन्त वेगेन हनुमत्प्रमुखास्तदा ॥२५॥

स सवृक्षं महाबाहुमापतन्तं महाबलम् ।
आर्यकं प्राहरत्तत्र बाहुभ्यां कुपितोऽङ्गदः ॥

मदान्धश्च न वेदैनमार्यकोऽयं ममेति सः ।
अथैनं निष्पिपेषाशु वेगवद्वसुधातले ॥ २७ ॥

स भग्नबाहूरुभुजो विह्वलः शोणितोक्षितः ।
मुमोह सहसा वीरो मुहूर्तं कपिकुञ्जरः ॥२८॥

स समाश्वस्य सहसा संक्रुद्धो राजमातुलः ।
वानरान्वारयामास दण्डेन मधुमोहितान् ॥

स कथंचिद्विमुक्तस्तैर्वानरैर्वानरर्षभः ।
उवाचैकान्तमाश्रित्य भृत्यान्स्वान्समुपागतान् ॥

एते तिष्ठन्तु गच्छामो भर्ता नो यत्र वानरः ।
सुग्रीवो विपुलग्रीवः सह रामेण तिष्ठति ॥

सर्वं चैवाङ्गदे दोषं श्रावयिष्यामि पार्थिवे ।
अमर्षी वचनं श्रुत्वा घातयिष्यति वानरान् ॥

इष्टं मधुवनं ह्येतत्सुग्रीवस्य महात्मनः ।
पितृपैतामहं दिव्यं देवैरपि दुरासदम् ॥ ३२ ॥

स वानरानिमान्सर्वान्मधुलुब्धान्गतायुषः ।
पातयिष्यति दण्डेन सुग्रीवः ससुहृज्जनान् ॥

वध्या ह्येते दुरात्मानो नृपाज्ञापरिभाविनः ।
अमर्षप्रभवो रोषः सफलो नो भविष्यति ॥

एवमुक्त्वा दधिमुखो वनपालान्महाबलः ।
जगाम सहसोत्पत्य वनपालैः समन्वितः ।

निमेषान्तरमात्रेण स हि प्राप्तो वनालयः ।
सहस्रांशुसुतो धीमान्सुग्रीवो यत्र वानरः ॥

रामं च लक्ष्मणं चैव दृष्ट्वा सुग्रीवमेव च ।
समप्रतिष्ठां जगतीमाकाशान्निपपात ह ॥ ३८ ॥

संनिपत्य महावीर्यः सर्वैस्तैः परिवारितः ।
हरिर्दधिमुखः पालैः पालानां परमेश्वरः ॥

स दीनवदनो भूत्वा कृत्वा शिरसि चाञ्जलिम् ।
सुग्रीवस्य शुभौ मूर्ध्ना चरणौ प्रत्यपीडयत् ॥

इति त्रिषष्टितम सर्ग ॥

——*——

## त्रिषष्टितमः सर्गः ॥



ततो मूर्ध्ना निपतितं वानरं वानरर्षभः ।
दृष्ट्वैवोद्विग्नहृदयो वाक्यमेतदुवाच ह ॥ १ ॥

उत्तिष्ठोत्तिष्ठ कस्मात्त्वं पादयोः पतितो मम ।
अभयं ते भवेद्वीर सर्वमेवाभिधीयताम् ॥ २ ॥

स तु विश्वासितस्तेन सुग्रीवेण महात्मना ।
उत्थाय सुमहाप्राज्ञो वाक्यं दधिमुखोऽब्रवीत् ॥

नैवर्क्षरजसा राजन्न त्वया नापि वालिना ।
वनं निसृष्टपूर्वं हि भक्षितं तत्तु वानरैः ॥ ४ ॥

एभिः प्रधर्षिताश्चैव वारिता वनरक्षिभिः ।
मधून्यचिन्तयित्वेमान्भक्षयन्ति पिबन्ति च ॥

शिष्टमत्रापविध्यन्ति भक्षयन्ति तथापरे ।
निवार्यमाणास्ते सर्वे भ्रुवौ वै दर्शयन्ति हि ॥

इमे हि संरब्धतरास्तथा तैः संप्रधर्षिताः
वारयन्तो वनात्तस्मात्क्रुद्धैर्वानरपुङ्गवैः ॥ ७ ॥

ततस्तैर्बहुभिर्वीरैर्वानरैर्वानरर्षभ ।
संरक्तनयनैः क्रोधाद्धरयः प्रविचालिताः ॥८॥

पाणिभिर्निहताः केचित्केचिज्जानुभिराहताः ।
प्रकृष्टाश्च यथाकामं देवमार्गं च दर्शिताः ॥९॥

एवमेते हताः शूरास्त्वयि तिष्ठति भर्तरि ।
कृत्स्नं मधुवनं चैव प्रकामं तैः प्रभक्ष्यते ॥१०॥

एवं विज्ञाप्यमानं तु सुग्रीवं वानरर्षभम् ।
अपृच्छत्तं महाप्राज्ञो लक्ष्मणः परवीरहा ॥

किमयं वानरो राजन्भवन्तं प्रत्युपस्थितः ।
कं चार्थमभिनिर्दिश्य दुःखितो वाक्यमब्रवीत् ॥

एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना ।
लक्ष्मणं प्रत्युवाचेदं वाक्यं वाक्यविशारदः ॥

आर्य लक्ष्मण संप्राह वीरो दधिमुखः कपिः ।
अङ्गदप्रमुखैर्वीरैर्भक्षितं मधु वानरैः ॥ १४ ॥

विचित्य दक्षिणामाशामागतैर्हरिपुंगवैः ।
नैषामकृतकृत्यानामीदृशः स्यादुपक्रमः ॥ १५ ॥

आगतैश्च प्रधर्षितं यथा मधुवनं हि तैः ।
धर्षितं च वनं कृत्स्नमुपयुक्तं च वानरैः ॥१६॥

वनं यदभिपन्नास्ते साधितं कर्म वानरैः ।
दृष्टा देवी न संदेहो न चान्येन हनूमता ॥

न ह्यन्यः साधने हेतुः कर्मणोऽस्य हनूमतः ।
कार्यसिद्धिर्मतिश्चैव तस्मिन्वानरपुंगवे ॥ १८ ॥

व्यवसायश्च वीर्यं च श्रुतं चापि प्रतिष्ठितम् ।
जाम्बवान्यत्र नेता स्यादङ्गदश्च महाबलः ॥

हनूमांश्चाप्यधिष्ठाता न तस्य गतिरन्यथा ।
अङ्गदप्रमुखैर्वीरैर्हतं मधुवनं किल ॥ २० ॥

वारयन्तश्च सहितास्तथा जानुभिराहताः ।
एतदर्थमयं प्राप्तो वक्तुं मधुरवागिह ॥ २१ ॥

नाम्ना दधिमुखो नाम हरिः प्रख्यातविक्रमः ।
दृष्टा सीता महाबाहो सौमित्रे पश्य तत्त्वतः ॥

अभिगम्य तथा सर्वे पिबन्ति मधु वानराः ।
न चाप्यदृष्ट्वा वैदेहीं विश्रुताः पुरुषर्षभ ॥२३॥

वनं दृष्टवरं दिव्यं धर्षयेयुर्वनौकसः ।
ततः प्रहृष्टो धर्मात्मा लक्ष्मणः सहराघवः ॥

श्रुत्वा कर्णसुखां वाणीं सुग्रीववदनाच्च्युताम् ।
प्राहृष्यत भृशं रामो लक्ष्मणश्च महाबलः ॥

श्रुत्वा दधिमुखस्येदं सुग्रीवस्तु प्रहृष्य च ।
वनपालं पुनर्वाक्यं सुग्रीवः प्रत्यभाषत ॥२६॥

प्रीतोऽस्मि सोऽहं यद्भुक्तं वनं तैः कृतकर्मभिः ।
मर्षितं मर्षणीयं च चेष्टितं कृतकर्मणाम् ॥२७॥

इच्छामि शीघ्रं हनुमत्प्रधाना
शाखामृगांस्तान्मृगराजदर्पान् ।
द्रष्टुं कृतार्थान्सह राघवाभ्यां
श्रोतुं च सीताधिगमे प्रयत्नम् ॥ २८ ॥

प्रीतिस्फीताक्षौ संप्रहृष्टौ कुमारौ
दृष्ट्वा सिद्धार्थौ वानराणां च राजा ।
अङ्गैः संहृष्टैः कर्मसिद्धिं विदित्वा
बाह्वोरासन्नां सोऽतिमात्रं ननन्द ॥

इति त्रिषष्टितम सर्ग ॥

## चतुःषष्टितमः सर्गः ॥

सुग्रीवेणैवमुक्तस्तु हृष्टो दधिमुखः कपिः ।
राघवं लक्ष्मणं चैव सुग्रीवं चाभ्यवादयत् ॥

स प्रणम्य च सुग्रीवं राघवौ च महाबलौ ।
वानरैः सह तैः शूरैर्दिवमेवोत्पपात ह ॥ २ ॥

स यथैवागतः पूर्वं तथैव त्वरितो गतः ।
निपत्य गगनाद्भूमौ तद्वनं प्रविवेश ह ॥ ३ ॥

स प्रविष्टो मधुवनं ददर्श हरियूथपान् ।
विमदानुत्थितान्सर्वान्मेहमानान्मधूदकम् ॥

स तानुपागमद्वीरो बद्ध्वा करपुटाञ्जलिम् ।
उवाच वचनं श्लक्ष्णमिदं हृष्टवदङ्गदम् ॥ ५ ॥

सौम्य रोषो न कर्तव्यो यदेभिरभिवारितः ।
अज्ञानाद्रक्षिभिः क्रोधाद्भवन्तः प्रतिषेधिताः ॥

युवराजस्त्वमीशश्च वनस्यास्य महाबल ।
मौर्ख्यात्पूर्वं कृतो दोषस्तं भवान्क्षन्तुमर्हति ॥

आख्यातं हि मया गत्वा पितृव्यस्य तवानघ ।
इहोपयातं सर्वेषामेतेषां वनचारिणाम् ॥ ८ ॥

स त्वदागमनं श्रुत्वा सहैभिर्हरियूथपैः ।
प्रहृष्टो न तु रुष्टोऽसौ वनं श्रुत्वा प्रधर्षितम् ॥

प्रहृष्टो मां पितृव्यस्ते सुग्रीवो वानरेश्वरः ।
शीघ्रं प्रेषय सर्वांस्तानिति होवाच पार्थिवः ॥

श्रुत्वा दधिमुखस्यैतद्वचनं श्लक्ष्णमङ्गदः ।
अब्रवीत्तान्हरिश्रेष्ठो वाक्यं वाक्यविशारदः ॥

शङ्के श्रुतोऽयं वृत्तान्तो रामेण हरियूथपाः ।
तत्क्षमं नेह नः स्थातुं कृते कार्ये परंतपाः ॥

पीत्वा मधु यथाकामं विश्रान्ता वनचारिणः ।
किं शेषं गमनं तत्र सुग्रीवो यत्र मे गुरुः ॥

सर्वे यथा मां वक्ष्यन्ति समेत्य हरियूथपाः ।
तथास्मि कर्ता कर्तव्ये भवद्भिः परवानहम् ॥

नाज्ञापयितुमीशोऽहं युवराजोऽस्मि यद्यपि ।
अयुक्तं कृतकर्माणो यूयं धर्षयितुं मया ॥१५॥

युवराजाङ्गदस्यैवं श्रुत्वा वचनमव्ययम् ।
प्रहृष्टमनसो वाक्यमिदमूचुर्वनौकसः ॥ १६ ॥

एवं वक्ष्यति को राजन्प्रभुः सन्वानरर्षभ ।
ऐश्वर्यमदमत्तो हि सर्वोऽहमिति मन्यते ॥१७॥

तव चेदं सुसदृशं वाक्यं नान्यस्य कस्यचित् ।
संनतिर्हि तवाख्याति भविष्यच्छुभभाग्यताम् ॥

सर्वे वयमपि प्राप्तास्तत्र गन्तुं कृतक्षणाः ।
स यत्र हरिवीराणां सुग्रीवः पतिरव्ययः ॥

त्वया ह्यनुक्तैर्हरिभिर्नैव शक्यं पदात्पदम् ।
क्वचिद्गन्तुं हरिश्रेष्ठ ब्रूमः सत्यमिदं तु ते ॥२०॥

एवं तु वदतां तेषामङ्गदः प्रत्यभाषत ।
बाढं गच्छाम इत्युक्त्वा उत्पपात महीतलात् ॥

उत्पतन्तमनूत्पेतुः सर्वे ते हरियूथपाः ।
कृत्वाकाशं निराकाशं यन्त्रोत्क्षिप्ता इवाचलाः ॥

तेऽम्बरं सहसोत्पत्य वेगवन्तः प्लवंगमाः ।
विनदन्तो महानादं घना वातेरिता यथा ॥

अङ्गदे त्वननुप्राप्ते सुग्रीवो वानराधिपः ।
उवाच शोकोपहतं रामं कमललोचनम् ॥ २४ ॥

समाश्वसिहि भद्रं ते दृष्टा देवी न संशयः ।
नागन्तुमिह शक्यं तैरतीते समये हि नः ॥

न मत्सकाशमागच्छेत्कृत्ये हि विनिपातिते ।
युवराजो महाबाहुः प्लवतां प्रवरोऽङ्गदः ॥२६॥

यद्यप्यकृतकृत्यानामीदृशः स्यादुपक्रमः ।
भवेत्तु दीनवदनो भ्रान्तविप्लुतमानसः ॥२७॥

पितृपैतामहं चैतत्पूर्वकैरभिरक्षितम् ।
न मे मधुवनं हन्याददृष्ट्वा प्लवगेश्वरः ॥ २८ ॥

कौसल्या सुप्रजा राम समाश्वसिहि सुव्रत ।
दृष्टा देवी न संदेहो न चान्येन हनूमता ॥

न ह्यन्यः साधने हेतुः कर्मणोऽस्य हनूमतः ।
हनूमति हि सिद्धिश्च मतिश्च मतिसत्तम ॥३०॥

व्यवसायश्च वीर्यं च सूर्ये तेज इव ध्रुवम् ।
जाम्बवान्यत्र नेता स्यादङ्गदश्च बलेश्वरः ॥

उवाच वाक्यं वाक्यज्ञः सीताया दर्शनं यथा ।
समुद्रं लङ्घयित्वाहं शतयोजनमायतम् ॥ ८ ॥

अगच्छं जानकीं सीतां मार्गमाणो दिदृक्षया ।
तत्र लङ्केति नगरी रावणस्य दुरात्मनः ॥

दक्षिणस्य समुद्रस्य तीरे वसति दक्षिणे ।
तत्र सीता मया दृष्टा रावणान्तःपुरे सती ॥

संन्यस्य त्वयि जीवन्ती रामा राम मनोरथम् ।
दृष्टा मे राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥

राक्षसीभिर्विरूपाभी रक्षिता प्रमदावने ।
दुःखमापद्यते देवी तवादुःखोचिता सती ॥

रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता ।
एकवेणीधरा दीना त्वयि चिन्तापरायणा ॥

अधःशय्या विवर्णाङ्गी पद्मिनीव हिमागमे ।
रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया ॥१४॥

देवी कथंचित्काकुत्स्थ त्वन्मना मार्गिता मया ।
इक्ष्वाकुवंशविख्यातिं शनैः कीर्तयतानघ ॥१५॥

सा मया नरशार्दूल विश्वासमुपपादिता ।
ततः संभाषिता देवी सर्वमर्थं च दर्शिता ॥

रामसुग्रीवसख्यं च श्रुत्वा प्रीतिमुपागता ।
नियतः समुदाचारो भक्तिश्चास्यास्तथा त्वयि ॥

एवं मया महाभाग दृष्टा जनकनन्दिनी ।
उग्रेण तपसा युक्ता त्वद्भक्त्या पुरुषर्षभ ॥

अभिज्ञानं च मे दत्तं यथावृत्तं तवान्तिके ।
चित्रकूटे महाप्राज्ञ वायसं प्रति राघव ॥ १९ ॥

विज्ञाप्यश्च नरव्याघ्रो रामो वायुसुत त्वया ।
अखिलेनेह यद्दृष्टमिति मामाह जानकी ॥ २० ॥

अयं चास्मै प्रदातव्यो यत्नात्सुपरिरक्षितः ।
ब्रुवता वचनान्येवं सुग्रीवस्योपशृण्वतः ॥ २१ ॥

एष चूडामणिः श्रीमान्मया सुपरिरक्षितः ।
मनःशिलायास्तिलको गण्डपार्श्वे निवेशितः ॥

त्वया प्रणष्टे तिलके तं किल स्मर्तुमर्हसि ।
एष निर्यातितः श्रीमान्मया ते वारिसंभवः ॥

एवं दृष्ट्वा प्रमोदिष्ये व्यसने त्वामिवानघ ।
जीवितं धारयिष्यामि मासं दशरथात्मज ॥

ऊर्ध्वं मासान्न जीवेयं रक्षसां वशमागता
इति मामब्रवीत्सीता कृशाङ्गी वरवर्णिनी ॥

रावणान्तःपुरे रुद्धा मृगीवोत्फुल्ललोचना ।
एतदेव मयाख्यातं सर्वं राघव यद्यथा ।
सर्वथा सागरजले संतारः प्रविधीयताम् ॥

तौ जाताश्वासौ राजपुत्रौ विदित्वा
तच्चाभिज्ञानं राघवाय प्रदाय ।
देव्या चाख्यातं सर्वमेवानुपूर्व्या-
द्वाचा संपूर्णं वायुपुत्रः शशंस ॥ २७ ॥

इति पञ्चषष्टितमः सर्गः ॥

---

षट्षष्टितमः सर्गः ॥



एवमुक्तो हनुमता रामो दशरथात्मजः ।
तं मणिं हृदये कृत्वा प्ररुरोद सलक्ष्मणः ॥१॥

स तु दृष्ट्वा मणिश्रेष्ठं राघवः शोककर्शितः।
नेत्राभ्यामश्रुपूर्णाभ्यां सुग्रीवमिदमब्रवीत् ॥ २॥

यथैव धेनुः स्रवति स्नेहाद्वत्सस्य वत्सला।
तथा ममापि हृदयं मणिरत्नस्य दर्शनात् ॥३॥

मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे।
वधूकाले यथाबद्धमधिकं मूर्ध्नि शोभते ॥ ४ ॥

अयं हि जलसंभूतो मणिः सज्जनपूजितः।
यज्ञे परमतुष्टेन दत्तः शक्रेण धीमता ॥ ५ ॥

इमं दृष्ट्वा मणिश्रेष्ठं यथा तातस्य दर्शनम्।
अद्यास्म्यवगतः सौम्य वैदेहस्य तथा विभोः ॥

अयं हि शोभते तस्याः प्रियाया मूर्ध्नि मे मणिः।
अद्यास्य दर्शनेनाहं प्राप्तां तामिव चिन्तये ॥ ७

किमाह सीता वैदेही ब्रूहि सौम्य पुनः पुनः।
पिपासुमिव तोयेन सिञ्चन्ती वाक्यवारिणा ॥

इतस्तु किं दुःखतरं यदिमं वारिसंभवम्।
मणिं पश्यामि सौमित्रे वैदेहीमागतां विना ॥

चिरं जीवति वैदेही यदि मासं धरिष्यति ।
न जीवेयं क्षणमपि विना तामसितेक्षणाम् ॥

नय मामपि तं देशं यत्र दृष्टा मम प्रिया ।
न तिष्ठेयं क्षणमपि प्रवृत्तिमुपलभ्य च ॥ ११ ॥

कथं सा मम सुश्रोणी भीरुभीरुः सती सदा ।
भयावहानां घोराणां मध्ये तिष्ठति रक्षसाम् ॥

शारदस्तिमिरोन्मुक्तो नूनं चन्द्र इवाम्बुदैः ।
आवृतं वदनं तस्या न विराजति राक्षसैः ।

किमाह सीता हनुमंस्तत्त्वतः कथयाद्य मे ।
एतेन खलु जीविष्ये भेषजेनातुरो यथा ॥

मधुरा मधुरालापा किमाह मम भामिनी ।
मद्विहीना वरारोहा हनुमन्कथयस्व मे ॥ १५ ॥

इति षट्षष्टितमः सर्गः ॥

―――*―――

## सप्तषष्टितमः सर्गः ॥



एवमुक्तस्तु हनुमान्राघवेण महात्मना ।
सीताया भाषितं सर्वं न्यवेदयत राघवे ॥ १ ॥

इदमुक्तवती देवी जानकी पुरुषर्षभ ।
पूर्ववृत्तमभिज्ञानं चित्रकूटे यथातथम् ॥ २ ॥

सुखसुप्ता त्वया सार्धं जानकी पूर्वमुत्थिता ।
वायसः [redacted]सोत्पत्य विरराद स्तनान्तरे ॥ ३ ॥

पर्यायेण च सुप्तस्त्वं देव्यङ्के भरताग्रज ।
पुनश्च किल पक्षी स देव्या जनयति व्यथाम् ॥

पुनः पुनरुपागम्य विरराद भृशं किल ।
ततस्त्वं बोधितस्तस्याः शोणितेन समुक्षितः ॥

वायसेन च तेनैव सततं बाध्यमानया ।
बोधितः किल देव्या त्वं सुखसुप्तः परंतप ॥

तां तु दृष्ट्वा महाबाहो दारितां च स्तनान्तरे ।
आशीविष इव क्रुद्धो निःश्वसन्नभ्यभाषथाः ॥

नखाग्रैः केन ते भीरु दारितं तु स्तनान्तरम् ।
कः क्रीडति सरोषेण पञ्चवक्त्रेण भोगिना ॥

निरीक्षमाणः सहसा वायसं समवेक्षथाः ।
नखैः सरुधिरैस्तीक्ष्णैस्तामेवाभिमुखं स्थितम् ॥

सुतः किल स शक्रस्य वायसः पततां वरः ।
धरान्तरचरः शीघ्रं पवनस्य गतौ समः ॥१०॥

ततस्तस्मिन्महाबाहो कोपसंवर्तितेक्षणः ।
वायसे त्वं कृथाः क्रूरां मतिं मतिमतां वर ॥

स दर्भं संस्तराद्गृह्य ब्राह्मेणास्त्रेण योजयः ।
स दीप्त इव कालाग्निर्जज्वालाभिमुखः खगम् ॥

क्षिप्तवांस्त्वं प्रदीप्तं हि दर्भं तं वायसं प्रति ।
ततस्तु वायसं दीप्तः स दर्भोऽनुजगाम ह ॥

स पित्रा च परित्यक्तः सुरैश्च समहर्षिभिः ।
त्रीँल्लोकान्संपरिक्रम्य त्रातारं नाधिगच्छति ॥

पुनरेवागतस्त्रस्तस्त्वत्सकाशमरिंदम ।
स तं निपतितं भूमौ शरण्यः शरणागतम् ॥

वधार्हमपि काकुत्स्थ कृपया पर्यपालयः ।
मोघमस्त्रं न शक्यं तु कर्तुमित्येव राघव ॥

भवांस्तस्याक्षि काकस्य हिनस्ति स्म स दक्षिणम् ।
राम त्वां स नमस्कृत्य राज्ञे दशरथाय च ॥

विसृष्टस्तु तदा काकः प्रतिपेदे स्वमालयम् ।
एवमस्त्रविदां श्रेष्ठः सत्त्ववाञ्शीलवानपि ॥ १८ ॥

किमर्थमस्त्रं रक्षःसु न योजयति राघवः ।
न नागा नापि गन्धर्वा नासुरा न मरुद्गणाः ।

न च सर्वे रणे शक्ता रामं प्रति समासितुम् ॥
तस्य वीर्यवतः कश्चिद्यद्यस्ति मयि संभ्रमः ॥

क्षिप्रं सुनिशितैर्बाणैर्हन्यतां युधि रावणः ।
भ्रातुरादेशमाज्ञाय लक्ष्मणो वा परंतपः ॥

स किमर्थं नरवरो न मां रक्षति राघवः ।
शक्तौ तौ पुरुषव्याघ्रौ वाय्वग्निसमतेजसौ ॥

सुराणामपि दुर्धर्षौ किमर्थं मामुपेक्षतः ।
ममैव दुष्कृतं किंचिन्महदस्ति न संशयः ।

समर्थावपि तौ यन्मां नावेक्षेते परंतपौ ।
वैदेह्या वचनं श्रुत्वा करुणं साश्रु भाषितम् ॥

पुनरप्यब्रवीद्वाक्यं तामिदं वचनमब्रवम् ।
त्वच्छोकविमुखो रामो देवि सत्येन ते शपे ॥

रामे दुःखाभिभूते तु लक्ष्मणः परितप्यते ।
कथंचिद्भवती दृष्टा न कालः परिशोचितुम् ॥

अस्मिन्मुहूर्ते दुःखानामन्तं द्रक्ष्यसि भामिनि ।
तावुभौ नरशार्दूलौ राजपुत्रावनिन्दितौ ॥२७॥

त्वद्दर्शनकृतोत्साहौ लङ्कां भस्मीकरिष्यतः ।
हत्वा च समरे रौद्रं रावणं सहबान्धवम् ।

राघवस्त्वां वरारोहे स्वां पुरीं नयते ध्रुवम् ।
यत्तु रामो विजानीयादभिज्ञानमनिन्दिते ॥

प्रीतिसंजननं तस्य प्रदातुं त्वमिहार्हसि ।
साभिवीक्ष्य दिशः सर्वा वेण्युद्ग्रथनमुत्तमम् ॥

मुक्त्वा वस्त्राद्ददौ मह्यं मणिमेतं महाबल ।
प्रतिगृह्य मणिं दिव्यं तव हेतो रघूद्वह ॥ ३१ ॥

शिरसा तां प्रणम्यार्यामहमागमने त्वरे ।
गमने च कृतोत्साहमवेक्ष्य वरवर्णिनी ॥३२॥
विवर्धमानं च हि मामुवाच जनकात्मजा ।
अश्रुपूर्णमुखी दीना बाष्पसंदिग्धभाषिणी ॥
ममोत्पतनसम्भ्रान्ता शोकवेगसमाहता ।
हनुमन्सिंहसङ्काशौ तावुभौ रामलक्ष्मणौ ॥३४॥
सुग्रीवं च सहामात्यं सर्वान्ब्रूया ह्यनामयम् ।
यथा च स महाबाहुर्मां तारयति राघवः ।
अस्माद्दुःखाम्बुसंरोधात्त्वं समाधातुमर्हसि ॥
इमं च तीव्रं मम शोकवेगं
रक्षोभिरेभिः परिभर्त्सनं च ।
ब्रूयास्तु रामस्य गतः समीपं
शिवश्च तेऽध्वास्तु हरिप्रवीर ॥ ३६ ॥
एतत्तवार्या नृपराजसिंह
सीता वचः प्राह विषादपूर्वम् ।
एतच्च बुद्ध्वा गदितं मया त्वं
श्रद्धत्स्व सीतां कुशलां समग्राम् ॥ ३७॥
इति सप्तषष्टितमः सर्गः ॥

## अष्टषष्टितमः सर्गः ॥

—*—

अथाहमुत्तरं देव्या पुनरुक्तः ससंभ्रमः
तव स्नेहान्नरव्याघ्र सौहार्दादनुमान्य वै ॥ १ ॥

एवं बहुविधं वाच्यो रामो दाशरथिस्त्वया ।
यथा मामाप्नुयाच्छीघ्रं हत्वा रावणमाहवे ॥

यदि वा मन्यसे वीर वसैकाहमरिंदम ।
कस्मिंश्चित्संवृते देशे विश्रान्तः श्वो गमिष्यसि ॥

मम चाप्यल्पभाग्यायाः सांनिध्यात्तव वानर ।
अस्य शोकविपाकस्य मुहूर्तं स्याद्विमोक्षणम् ॥

गते हि त्वयि विक्रान्ते पुनरागमनाय वै ।
प्राणानामपि संदेहो मम स्यान्नात्र संशयः ॥

तवादर्शनजः शोको भूयो मां परितापयेत् ।
दुःखाद्दुःखपराभूतां दुर्गतां दुःखभागिनीम् ॥

अयं च वीर संदेहस्तिष्ठतीव ममाग्रतः ।
सुमहांस्त्वत्सहायेषु हर्यृक्षेषु हरीश्वर ॥ ७ ॥

कथं नु खलु दुष्पारं तरिष्यन्ति महोदधिम् ।
तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥

अयाण्यायेव भूतानां सागरस्यास्य लङ्घने ।
शक्तिः स्याद्वैनतेयस्य वायोर्वा तव वानघ ॥

तदस्मिन्कार्यनियोगे वीरैवं दुरतिक्रमे ।
किं पश्यसि समाधानं त्वं हि कार्यविदां वरः ॥

काममस्य त्वमेवैकः कार्यस्य परिसाधने ।
पर्याप्तः परवीरघ्न यशस्यस्ते बलोदयः । ११॥

बलैः समग्रैर्यदि मां हत्वा रावणमाहवे ।
विजयी स्वां पुरीं रामो नयेत्तत्स्याद्यशस्करम्॥

यथाहं तस्य वीरस्य वनादुपधिना हृता ।
रक्षसा तद्भयादेव तथा नार्हति राघवः । १३॥

बलैस्तु संकुलां कृत्वा लङ्कां परबलार्दनः ।
मां नयद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥

तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः ।
भवत्याहवशूरस्य तथा त्वमुपपादय । १५ ॥

तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम् ।
निशम्याह ततः शेषं वाक्यमुत्तरमब्रवम् ॥

देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः ।
सुग्रीवः सत्त्वसंपन्नस्तवार्थे कृतनिश्चयः ॥१७॥

तस्य विक्रमसंपन्नाः सत्त्ववन्तो महाबलाः ।
मनःसंकल्पसंपाता निदेशे हरयः स्थिताः ॥

येषां नोपरि नाधस्तान्न तिर्यक्सज्जते गतिः ।
न च कर्मसु सीदन्ति महत्स्वमिततेजसः ॥

असकृत्तैर्महाभागैर्वानरैर्बलसंयुतैः ।
प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः ॥२०॥

मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः ।
मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसंनिधौ ॥

अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः ।
न हि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः ॥

तदलं परितापेन देवि मन्युर्व्यपैतु ते
एकोत्पातेन ते लङ्कामेष्यन्ति हरियूथपाः ॥

मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ ।
त्वत्सकाशं महाभागे नृसिंहावागमिष्यतः ॥

अरिघ्नं सिंहसंकाशं क्षिप्रं द्रक्ष्यसि राघवम् ।
लक्ष्मणं च धनुष्पाणिं लङ्काद्वारमुपस्थितम् ॥

नखदंष्ट्रायुधान्वीरान्सिंहशार्दूलविक्रमान्
वानरान्वारणेन्द्राभान्क्षिप्रं द्रक्ष्यसि संगतान् ॥

शैलाम्बुदनिकाशानां लङ्कामलयसानुषु
नर्दतां कपिमुख्यानामचिराच्छ्रोष्यसि स्वनम् ॥

निहत्य रावणं चैव राघवः सह लक्ष्मणः ।
अभिषिक्तमयोध्यायां क्षिप्रं द्रक्ष्यसि राघवम् ॥

ततो मया वाग्भिरदीनभाषिणा
शिवाभिरिष्टाभिरभिप्रसादिता ।
जगाम शान्तिं मम मैथिलात्मजा
तवापि शोकेन तदाभिपीडिता । २९ ॥

इति अष्टषष्टितम सर्ग ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
चतुर्विंशतिसहस्रिकायां संहितायाम्

सुन्दरकाण्ड समाप्त ॥

—*—

॥ श्री ॥

# ॥ श्रीमद्रामायणपारायणसमापनक्रमः ॥

———*———

## ॥ स्मार्तसंप्रदायः ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु ॥ १ ॥

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥

अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः ।
अधनाः सधनाः सन्तु जीवन्तु शरदां शतम् ॥

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैकमक्षरं प्रोक्तं महापातकनाशनम् ॥ ४ ॥

शृण्वन्रामायणं भक्त्या यः पादं पदमेव वा ।
स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥ ५ ॥

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ६ ॥

यन्मङ्गल सहस्राक्ष सर्वदेवनमस्कृते ।
वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम् ॥ ७ ॥

मङ्गल कोसलेन्द्राय महनीयगुणात्मने ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ८ ॥

यन्मङ्गल सुपर्णस्य विनताकल्पयत्पुरा ।
अमृत प्रार्थयानस्य तत्ते भवतु मङ्गलम् ॥ ९ ॥

अमृतोत्पादने दैत्यान्घ्नतो वज्रधरस्य यत् ।
अदितिर्मङ्गल प्रादात्तत्ते भवतु मङ्गलम् ॥ १० ॥

त्रीन्विक्रमान्प्रक्रमतो विष्णोरमिततेजस ।
यदासीन्मङ्गल राम तत्ते भवतु मङ्गलम् ॥ ११ ॥

ऋतव सागरा द्वीपा वेदा लोका दिशश्च ते ।
मङ्गलानि महाबाहो दिशन्तु तव सर्वदा ॥ १२ ॥

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत्सकल परस्मै
नारायणायेति समर्पयामि ॥ १३ ॥

——*——

## ॥ श्रीवैष्णवसंप्रदायः ॥

एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः ।
प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ १ ॥

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ २ ॥

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥

कावेरी वर्धतां काले काले वर्षतु वासवः ।
श्रीरङ्गनाथो जयतु श्रीरङ्गश्रीश्च वर्धताम् ॥ ४ ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु ॥ ५ ॥

मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ६ ॥

वेदवेदान्तवेद्याय मेघश्यामलमूर्तये ।
पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गलम् ॥ ७ ॥

विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः ।
भाग्यानां परिपाकाय भव्यरूपाय मङ्गलम् ॥ ८ ॥

पितृभक्ताय सततं भ्रातृभिः सह सीतया ।
नन्दिताखिललोकाय रामभद्राय मङ्गलम् ॥ ९ ॥

त्यक्तसाकेतवासाय चित्रकूटविहारिणे ।
सेव्याय सर्वयमिनां धीरोदाराय मङ्गलम् ॥ १० ॥

सौमित्रिणा च जानक्या चापबाणासिधारिणे ।
संसेव्याय सदा भक्त्या स्वामिने मम मङ्गलम् ॥

दण्डकारण्यवासाय खण्डितामरशत्रवे ।
गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गलम् ॥१२॥

सादरं शबरीदत्तफलमूलाभिलाषिणे ।
सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मङ्गलम् ॥ १३ ॥

हनुमत्समवेताय हरीशाभीष्टदायिने ।
वालिप्रमथनायास्तु महाधीराय मङ्गलम् ॥ १४ ॥

श्रीमते रघुवीराय सेतूल्लङ्घितसिन्धवे ।
जितराक्षसराजाय रणधीराय मङ्गलम् ॥ १५ ॥

आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया ।
राजाधिराजराजाय रामभद्राय मङ्गलम् ॥ १६ ॥

मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः ।
सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम् ॥ १७ ॥

——*——

॥ माध्वसंप्रदायः ॥

स्वस्ति प्रजाभ्य परिपालयन्तां
न्याय्येन मार्गेण महीं महीशा ।
गोब्राह्मणेभ्य शुभमस्तु नित्य
लोका समस्ता सुखिनो भवन्तु ॥ १ ॥

काले वर्षतु पर्जन्य पृथिवी सस्यशालिनी ।
देशोऽय क्षोभरहितो ब्राह्मणा सन्तु निर्भया. ॥

लाभस्तेषां जयस्तेषा कुतस्तेषां पराभव ।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठित ॥ ३ ॥

मङ्गल कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ४ ॥

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वा प्रकृते स्वभावात् ।
करोमि यद्यत्सकल परस्मै
नारायणायेति समर्पयामि ॥ ५ ॥

